University of Mysore

Oriental Library Publications

SANSKRIT SERIES No. 83

GENERAL EDITOR

H. R RANGASWAMY IYENGAR, M.A.,

*Curator in-charge Government Oriental Library, Mysore*

श्रीमदहोबलसूरिविरचितम्

# वाक्यार्थरत्नम्

स्वोपज्ञसुवर्णमुद्रिकाख्यव्याख्यया समलङ्कृतम्

# THE VĀKYĀRTHA RATNAM

WITH

THE SUVARNA MUDRIKĀ

OF

AHOBALA SURI







EDITED BY

VIDVAN R. RAMA SASTRY

*Pandit, Oriental Library, Mysore*

MYSORE:
PRINTED BY THE ASST. SUPDT. AT THE GOVT. BRANCH PRESS
1943

# PREFACE

IT is a matter of pride that the Oriental Library, Mysore, has been able to bring out, for the first time, an edition of the text of *Vākyārtharatna* with its commentary *Suvarṇa Mudrikā* by Ahōbalasūri, a compendium on the theory of import of Vedic injunction according to the 'Prābhākara School' of Pūrva Mīmāmsa. The editing of this work had been at first entrusted to Pandit A. Vyasachar, Proof-reader, and was later on transferred to Pandit R. Ramasastry, who has prepared the edition with a good Sanskrit introduction by collating five manuscripts, which have been fully described in his introduction. The late Mr. M. S. Basavalingayya, M.A., B.L., Curator of the Library, had under contemplation the publication of an English translation along with the Sanskrit text of the work. But alas! death snatched him away from our midst in the prime of his youth, before the work could see the light of day.

By publishing this volume, the Oriental Library, Mysore, may be said to have enriched the meagre stock of literature of the 'Prābhākara School' which is not so widely known as the other—the 'Bhāṭṭā School' of the Pūrva Mīmāmsa. The earliest work that is available on this system, devoted mainly to the problems of right interpretation of the Vedic texts for sacrificial purposes, is the *Mīmāmsa Sūtra* of Jaimini. This work consists of 12 Adhyāyas or chapters and has been commented upon by Vṛittikāras like Upavarṣa, Bōdhāyana, Bhartṛmitra, Hari and Bhavadāsa. The oldest of these Vṛttikāras is Upavarṣa whose views have been set forth in detail by Ṣabara in his Bhāṣya on the Sūtras. But these Commentators are known only by names; the earliest Commentary that has been available to us, so far, in its entirety is that by Ṣabara, known as the Ṣābara Bhāṣya. It is this work that has formed the basis and starting point

for all later Mīmāmsa works. The earliest commentaries, so far found on this Bhaṣya, are those by Prabhākara also known as Guru, and by Kumārila Bhatta or simply Bhatta. These two writers became the founders of the two well-known schools of the Pūrva Mīmāmsa, to which a third was later on added in the person of Murāri Miśra.

Of the two schools, the Bhātta and the Prābhākara, the former is very well known and has influenced other schools of Indian thought especially the Advaita System. Many works of this school have been discovered, published and even studied in Schools and Colleges. The *Bṛhati* of Prabhākara, a commentary on Śabara Bhāṣya with its Tīka, *Ṛjuvimala*, the *Prakaraṇa Pañcika* of Śālikā-nātha and the *Nayaviveka* of Bhavanātha exhaust the list of works now available on the Prābhākara School. The *Vākyārtharatna* with its commentary *Suvarṇa Mudrika* will surely be a welcome addition to the works of this school. It is a small compendium in four chapters by Ahōbala Sūri of whom we know very little except that he was the son of Mārayārya of Śrivatsa Gotra, and is different from Aḥobalasuri, the author of *Abhinava Kādambari*, *Nala Vilāsa Nātakam*, or of the Commentary on *Sankalpa Sūryodaya* of Vedānta Deśika. It brings within a short compass all the details which are scattered over several Adhikaranas in the Bhaṣya and gives in a lucid style a well-grounded exposition of the *Niyoga* theory of the import of Vedic sentences as distinguished from the *Bhāvana* theory of the Bhāttas. I am sure this work will be of great value as an efficient aid to the study of the Prābhākara School. I commend to the readers the thoughtful Sanskrit Introduction which gives a summary of the work by chapters and explains the usefulness of the principles of interpretation according to Mīmāmsa in determining the meanings of texts of Hindu Law.

MYSORE,
*16-11-1943.*

H. R. RANGASWAMY IYENGAR, M.A.,
*Curator in-charge, Oriental Library, Mysore.*

॥ श्रीः ॥

# भूमिका

---

यत्कृपावज्रपातेन विघ्नाद्रिरपि भिद्यते ।
वन्दे तं गजराजास्यं भक्ताभीष्टवरप्रदम् ॥

## विज्ञप्तिः

अयि गुणैकपक्षपातिनो विज्ञवरा वाचकमहाशयाः ! किञ्चिदिदं भवतां पुरतः सकुतुकमावेदयामि । स्तो हि मीमांसातन्त्रे सुगृहीतनामधेययोः [1] प्रभाकरकुमारिलयोः सिद्धान्तौ । तत्र कुमारिलसिद्धान्तबोधका बहवो ग्रन्था मुद्रिता अमुद्रिताश्च दरीदृश्यन्ते । प्रभाकरसिद्धान्तस्य तु पूर्वपक्षतया दृष्टान्ततया वा कौमारिलग्रन्थेषु ग्रन्थान्तरेषु वानूद्यमानत्वेऽपि तस्यैव सिद्धान्तस्य प्राधान्येन प्रतिपादका ग्रन्थाः कौमारिलग्रन्थापेक्षया विरलतरा एवेत्यतिरोहितमेतत्समेषामपि विदुषाम् ॥

## प्रकृतवक्तव्यम्

साम्प्रतं प्राचीनग्रन्थमुद्रणबद्धकङ्कणान्महीशूरराजकीयप्राच्यकोशागारात्सम्मुद्य प्रकाशितः सुवर्णमुद्रिकाख्यया व्याख्यया सनाथितो वाक्यार्थरत्नाभिधोऽयं मीमांसाग्रन्थोऽतिविस्तीर्णस्यापि गुरुमतवाक्यार्थस्य सरलसरण्या सङ्ग्रहेण प्रतिपादको गुरुमतवाक्यार्थव्युत्पित्सूनामतितरामुपकुर्यादिति महदिदं प्रमोदस्थानं विद्वज्जनबृन्दस्याध्यापकाध्येतृनिवहस्य च ॥

---

[1] प्रभाकरस्यैव गुरुरिति नामान्तरम् । प्रभाकरो हि कदाचित् स्वगुरुणाऽविदितं वाक्यार्थं तस्मै न्यवेदयत् । गुरुश्च तदा तं 'त्वमेव गुरुः' इति निरदिक्षत् । तदाप्रभृत्ययं गुरुनाम्ना प्रथित इति कथाऽनुश्रूयते.

## ग्रन्थनामनिर्देशः

ग्रन्थेऽस्मिन् 'वाक्यार्थरत्नं प्राकाशि' इति मूलोपान्त्यश्लोकभागेन 'वाक्यार्थरत्नं सुधियां धृतये योजयाम्यहम्' इति व्याख्यानश्लोकभागेन च मूलभागो वाक्यार्थरत्ननाम्ना व्यवह्रियत इति विज्ञायते। तथा व्याख्याने—

"सुवर्णपदसंहत्या मुद्रयाऽभीष्टया गुरोः।
वाक्यार्थरत्नं सुधियां धृतये योजयाम्यहम्"॥

इति श्लोकेन, परिच्छेदसमाप्तौ सर्वत्र 'वाक्यार्थरत्नतात्पर्यप्रकाशिकायां सुवर्णमुद्रिकायां' इत्युल्लेखेन च व्याख्यानभागः सुवर्णमुद्रिकानाम्ना व्यवह्रियत इति विज्ञायते॥

## ग्रन्थकर्तृसमालोचनम्

ग्रन्थेऽस्मिन् मूलस्य ग्रथयिता श्रीवत्सगोत्रे दुर्वासोवंशसंभूतस्य मारयार्यस्यात्मसंभवोऽहोबलनामधेय इत्येतन्मूलरचयितैव—

"इति श्रीवत्सदुर्वासोमारयार्यस्य सूनुना।
अहोबलेन वाक्यार्थरत्नं प्राकाशि सूरिणा"॥

इत्येतन्मूलोपान्त्यश्लोके व्यक्तं न्यरूपयत्। व्याख्यानेऽपि परिच्छेदसमाप्तौ सर्वत्र "इत्यहोबलार्यविरचितायाम्" इत्युक्त्या व्याख्यानस्याप्यहोबलकर्तृकत्वावगमान्मूलव्याख्यानयोरुभयोरप्येककर्तृकत्व-मध्यवसीयते। स्थाने चैतत्। दृश्यते हि पद्यात्मना मूलं विरचितवतां शिष्यानुकम्पया स्वकीयाभिप्रायाविष्करणाय मूलार्थविवरणेऽपि प्रवृत्तिः। यथा जैमिनीयन्यायमालारचयितॄणां माधवाचार्याणां तद्विस्तरे प्रवृत्तिः। यथा वा कारिकावलीरचयितॄणां विश्वनाथभट्टाचार्याणां मुक्तावल्याम्। एवमत्रापि पद्यात्मकमूलकर्तुरेव स्वाभिप्रायाविष्करणाय व्याख्यानेऽपि प्रवृत्तिरुपपद्यते। किं च व्याख्यानान्ते "मारयार्यतनयेनाहोबलेन विरचितायां वाक्यार्थरत्नप्रकाशिकायां सुवर्णमुद्रिकायां" इत्युक्तिरप्यमुमर्थं द्रढयति॥

## ग्रन्थकर्तुर्देशकालादिचिन्ता

ग्रन्थकृतोऽस्य देशे काले ग्रन्थान्तरेषु वा नोपलभ्यते किञ्चिद्गमकम्। अहोबलेत्येतद्ग्रन्थकृत्समाननामधेयेषु यतिराजचरित्र-चम्प्वा[1]दिकर्तृषु केषुचित्समुपलभ्यमानेष्वपि वाक्यार्थरत्नकृदय-महोबलस्तेभ्यो भिद्यत इति तद्ग्रन्थावलोकनाज्ज्ञायते ॥

## ग्रन्थप्रवेशः

ग्रन्थोऽयं परिच्छेदचतुष्टयात्मको नियोगरूपकार्यस्य प्राधा-न्येन वाक्यार्थत्वं समर्थयति। तदुपयोगितयान्येऽपि विषया ग्रन्थेऽस्मिन्नययोज्यन्त ॥

## प्रथमपरिच्छेदावलोकनम्

तत्र प्रथमपरिच्छेदे ग्रन्थकृता नियोगरूपकार्यस्य प्राधान्येन वाक्यार्थत्वसिध्युपयोगिविचारनिरूपणपूर्वकं कार्यरूपापूर्वस्य नि-योगादिसंज्ञितस्य लिङर्थत्वं सम्यङ्न्यरूपि ॥

## मङ्गलाचरणचिन्ता

तत्रापि ग्रन्थकृत्प्रथमं तावत् "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते" इत्याद्यभियुक्तोक्तिमनुसरन् "उपा-स्महे महो रामनामकम्" इत्यादिना स्वेष्टदेवतारूपं रामनामकं ज्योतिरनुसन्धाय ग्रन्थं प्रारेभे। अत्र "यन्नियोगत" इति पद-व्याख्यानावसरे ग्रन्थकृता मीमांसातन्त्रे नियोगादिपदाभिलप्या-पूर्वस्यैव प्राधान्याद्विग्रहादिमद्देवताया अनङ्गीकारेण "इन्दीवर-दलश्यामः पद्मपत्रनिभेक्षणः" इत्यादिवचनसिद्धविग्रहाद्युपेतं राम-नामकदेवतास्वरूपं तन्त्रविरुद्धं कथमनुसन्धीयत इत्याशङ्क्य नियोगस्यापि रामपदाभिधेयपरमेश्वररूपत्वेनैव फलजनकत्वम्, देवताविग्रहनिराकरणं तु नियोगप्राधान्यप्रतिपादनार्थमेव, न सर्वथा विग्रहनिषेधतात्पर्यकम्, अत एव "यस्यै कस्यै देवतायै

---

1 अत्र आदिपदेन अभिनवकादम्बरी–नलविलासनाटक–पादरेणुकासहस्र–तद्व्याख्या–सङ्कल्पसूर्योदयव्याख्या–वेदान्तसारव्याख्यानामकग्रन्था ग्राह्याः.

*

हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्" इति वचनसिद्धदेवतानुसन्धानमप्युपपद्यते, देवताया विग्रहाद्यभावे तदनुसन्धानमेव न घटत इत्याभिप्रायेण समाहितम् ॥

## देवताविषये भट्टमतानुयायिनामभिप्रायः

भट्टमतानुयायिनस्तु—यद्यपि "यज देवपूजायाम्" इति देवपूजार्थकयजिधातोर्निष्पन्नो यागशब्दो देवतोद्देश्यकद्रव्यत्यागरूपं यागं वदति। यागे च देवतायाः सम्प्रदानत्वात् सम्प्रदानस्य च कर्मकारकापेक्षयाप्यभिप्रेयमाणतया प्राधान्यमस्त्येव। यागश्चोक्तविधया देवपूजारूपो देवतासंस्कारकः। संस्कारश्चोपयोक्ष्यमाणस्योपयुक्तस्य वा संभवति। यागादन्यत्र देवतोपयोगस्यानिष्पन्नत्वादुपयोक्ष्यमाणत्वेनैव देवतायाः संस्कारो वाच्यः। उपयोगश्च क्वेत्यपेक्षायां "स एवैनं भूतिं गमयति" "तृप्त एवैनमिन्द्रः प्रजया पशुभिश्च तर्पयति" इत्याद्यर्थवादवाक्यानुसारेण यागेन प्रसन्नाया देवतायाः फलदातृत्वावगमात्फलदान एव वाच्यः। तथा च याग एव फलजनक इत्यत्र नास्ति किञ्चित्प्रमाणम्। तदभावे च यागस्यैवापूर्वजनकत्वे सुतरां प्रमाणाभाव इति शङ्काऽवतरति ॥

तथापि "ब्राह्मणाय गां ददाति" इत्यादौ ब्राह्मणस्य फलदातृत्वासंभवेन सम्प्रदानसामान्यस्यापि न कर्मकारकापेक्षयाभिप्रेयमाणत्वमुपपद्यते। प्रत्युत यागकरणकभावनाया भाव्यापेक्षायां स्वर्गादिफलस्यैव भाव्यत्वेनान्वये देवताया अपि यागसंस्कार्यत्वाभ्युपगमे तस्या अप्युद्देश्यत्वावश्यम्भावेनानेकोद्देश्यान्वयनिबन्धनवाक्यभेदप्रसङ्गाद्देवताया यागं प्रत्यङ्गत्वमेवाङ्गीकर्तव्यम् ॥

न च क्षणिको यागो न कालान्तरभाविफलं जनयितुमलम्, अतस्तस्य फलजनकत्वे व्यापारापेक्षायामश्रुतापूर्वकल्पनापेक्षया रात्रिसत्रादाविवार्थवादिकदेवताप्रसादस्यैव द्वारत्वकल्पनौचित्यात् प्रसादस्य च देवताया विग्रहभोगादिकं विनानुपपन्नतया "तृप्त एवैनमिन्द्रः प्रजया पशुभिश्च तर्पयति" इत्याद्यर्थवादानुसारेण विग्रहभोगादिकल्पनेऽपि न दोष इति वाच्यम्; प्रसादस्येच्छारूपतया फलं भवत्वित्येवंरूपेण फलजनकत्वे तस्य सर्वपुरुषसाधारणतया दर्शादियागाकर्तुरपि तज्जन्यफलं प्रसज्येत। "दर्शादियाग-

कर्तुस्तत्फलं भवतु" इत्येवं कर्तृविशेषसंसृष्टरूपेण फलजनकत्वे जनकतावच्छेदकगौरवम् ॥

किं च दर्शादियागकर्तुः सकृद्दर्शादिजन्यफलभोगे जातेऽपि तस्य दर्शादियागकर्तृत्वानपायादन्यकृतदर्शपूर्णमासादिजन्यप्रसादात्पुनरपि तज्जन्यफलस्य तस्मिन् प्रसक्तिरनिवार्या स्यात् । अतस्तद्वारणाय "तत्फलव्यक्तिं प्रति तद्व्यक्तिकर्तुः सा फलव्यक्तिर्भवतु" इत्येवमाकारेच्छात्वेन विशिष्य कारणत्वोक्तौ चानेककार्यकारणभावकल्पनं कारणतावच्छेदकगौरवं च स्यात् ॥

अपि चैतादृशप्रसादो यागजन्यत्वेनाभ्युपगम्यमानो यदि ब्राह्मणतर्पणान्ते जायते तदा दर्शादियागानां क्षणिकत्वेन विनष्टतया प्रसादोत्पादो न युज्यते । यदि च तत्तद्यागेभ्योऽप्यवान्तरप्रसादा "आग्नेयव्यक्तिकर्तुस्तज्जन्यफलं भवतु" इत्येवमाद्याकारा जायन्ते तदा देवतानामवन्ध्येच्छत्वाद्दैवादग्नीषोमीयाद्यकरणेऽपि फलप्राप्तिः स्यात् ॥

अपि च विध्यनपेक्षणादपि देवताप्रसादादिकं नार्थवादेन बोधयितुं शक्यम् । न च विध्यनपेक्षितत्वादर्थवादोपस्थितप्रसादाद्यकल्पनेऽपि लक्षणया प्राशस्त्यपरस्याप्यर्थवादस्य प्रमाणान्तराविरोधे स्वशक्यार्थेऽपि प्रामाण्याभ्युपगमाद्विग्रहभोगप्रसादादिस्वीकारादपूर्वान्त एव प्रसादस्वीकरणमस्त्विति वाच्यम्, प्राशस्त्यतात्पर्यकस्य वाक्यस्यान्यत्र तात्पर्यायोगात् । अन्यथा पुरुषमात्रप्रवेशतात्पर्यके "यष्टीः प्रवेशय" इत्यादौ, परान्नभोजननिवृत्तितात्पर्यके "मृदं भुङ्क्ष्व" त्यादौ च प्रमाणान्तरविरोधाभावेन स्वशक्ययष्टिप्रवेशमृद्भक्षणादावपि प्रामाण्यमापद्येत । अतः "सकृदुच्चरितः शब्दः सकृदेनार्थं गमयति" इति न्यायानुरोधेन शाब्दबोधं प्रति तात्पर्यज्ञानस्य कारणत्वानुरोधेन चार्थवादानां शक्यार्थे प्रामाण्यानुपपत्तेर्न कथञ्चिदपि देवताविग्रहादिस्वीकारः संभवति । किं तु शब्द एव देवता । अर्थस्तु प्रातिपदिकानुरोधाच्चेतनोऽचेतनो वा कश्चित्स्वीक्रियते । न तु विग्रहादिमान् । देवताध्यानादिकं त्वाहार्यरूपमेवेति वदन्ति ॥

## ग्रन्थारम्भबीजम्

सत्स्वपि बहुषु मीमांसाशास्त्रप्रमेयेषु तेषां सर्वेषामपि तत्तदधिकरणपर्यवसितत्वान्न पृथङ्निरूपणमपेक्ष्यते। वाक्यार्थोपयोगिप्रमेयस्य त्वनेकाधिकरणपर्यवसानादेकत्रासिद्धतया तदुपपादनार्थैतद्ग्रन्थारम्भः। व्यक्तं चैतत् "धर्मे च" (श्लो. ४) त्यादिश्लोकव्याख्यायाम् ॥

## प्रवर्तकचिन्ता

[1] "अथातो धर्मजिज्ञासे" ति सूत्रेण धर्मविषयकजिज्ञासायां प्रतिज्ञातायां "को धर्मः किंलक्षण" इति पुनर्जिज्ञासोदये [2] "चोदनालक्षणोऽर्थो धर्म" इति सूत्रेण धर्मस्वरूपं तत्प्रमाणं च न्यरूपि। तत्र च चोदनाशब्दार्थविवरणवेलायां भाष्ये [3] "चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः" इत्यभ्यधायि। अभिधानेऽस्मिन् वचनस्य क्रियाप्रवर्तकत्वाभिधानं प्रवृत्तिहेतुभूतार्थाभिधायकत्वेनोपपद्यते। एवं च प्रवृत्तिहेतुभूतार्थाभिधायकवचनं प्रवर्तकमिति भाष्याशयः पर्यवस्यति। अत्र प्रवृत्तिजनकोऽर्थः क इति चिन्त्यते ॥

## धात्वर्थस्य प्रवर्तकत्वाशङ्कासमाधाने

नन्विष्टसाधनीभूतधात्वर्थ एव प्रवर्तकः। इष्टानिष्टप्राप्तिपरिहारयोः पुरुषाभिलषितत्वेन तत्साधन एव लोके प्रवृत्तिदर्शनात्। वेदेऽपि "स्वर्गकामो यजेते" त्यनेन यागस्यैव स्वर्गसाधनत्वमवगम्यते। अत इष्टसाधनीभूतधात्वर्थस्यैव प्रवर्तकत्वमिति चेत्—न, इष्टहेतुताया अतीतानागतधात्वर्थसाधारण्येन तत्रापि फलार्थिनः प्रवृत्त्यापत्तेः। न च कृत्यर्हधात्वर्थस्यैवेष्टहेतुत्वम्, अतो नातीतादिधात्वर्थे पुरुषस्य प्रवृत्त्यापत्तिरिति वाच्यम्, कृत्यर्हत्वस्य विभज्यवचनीयत्वात्। तथाहि–किमत्र धात्वर्थस्य कृत्यर्हत्वम्? किं कृतिजन्यत्वरूपम्? आहोस्वित्कृत्युद्देश्यत्वरूपम्? नाद्यः, अतीतादिस्थलेऽपि कृतिजन्यत्वस्याबाधितत्वेन प्रवृत्त्यापत्तेरपरिहार्यत्वात्। द्वितीये तु न गुरुमतविरोधः। तन्मतेऽपि कार्यज्ञानस्य कृत्युद्देश्येष्टज्ञानहेतुत्वाभ्युपगमात्। नापि केवलेष्टसाधनताज्ञानस्य प्रवर्तकत्वम्। इन्दुमण्डलस्यापीष्टसाधनत्वमवगत्य तत्रापि प्रवृत्त्यापत्तेः ॥

---

[1] जै. सू. १-१-१. [2] जै. सू. १-१-२. [3] शाबरभाष्यम्. १-१-२.

## शब्दभावनायाः प्रवर्तकत्वाशङ्का

शब्दभावनायाः प्रवर्तकतावादिनस्तु—"यजेत स्वर्गकामः" इत्यत्र लिङ्प्रत्ययो लिङ्त्वेन शब्दभावनामभिधत्ते। आख्याातत्वेन चार्थभावनाम्। तदुक्तम्—

[1] "अभिधाभावनामाहुरन्यामेव लिङादयः।
अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते॥" इति।

अर्थभावना नामोत्पद्यमानस्वर्गादेरुत्पत्त्यनुकूल उत्पादकनिष्ठ-व्यापारविशेषः। स च प्रयत्नापरपर्यायः कृत्यात्मक एव। शब्द-भावना तु पुरुषस्य यागादौ प्रवृत्त्यनुकूलोऽलौकिको व्यापारविशेषः। स चानादिशब्दनिष्ठत्वाच्छब्दभावनापदाभिधेयो भवति। शब्द-भावनायाः प्रवर्तकत्वं च लिङादिश्रवणादवगम्यते। लिङ्श्रवणे हि पुरुषस्य 'अयं मां प्रवर्तयति' मत्प्रवृत्त्यनुकूलव्यापारवानयम्' इत्येवं बोधो भवति। लिङश्च प्रवर्तकत्वं प्रवर्तकाभिधायित्वेनोप-पादनीयम्। एवं च लिङभिहितः शब्दभावनारूपोऽर्थः प्रवर्तक इति सिध्यतीति वदन्ति॥

## शब्दभावनाया विध्यभिहितत्वानुपपत्तिः

अत्रोच्यते—विधिनाभिहितोऽर्थः प्रवर्तक इत्यभ्युपगन्तव्यम्। शब्दभावनायास्तु न शब्देनाभिधानमुपपद्यते। शब्दस्य स्वव्यापारान-भिधायकत्वात्। शब्दभावना हि पुरुषप्रवृत्तिप्रयोजकः शब्दनिष्ठो व्यापारविशेष इत्युक्तम्॥

ननु कथं शब्दभावनायाः शब्दव्यापारत्वमिति चेत्; उच्यते-लोके ह्युत्तमवृद्धो मध्यमवृद्धप्रवृत्तिसिद्धये गामानयेत्यादिवाक्यं प्रयुङ्क्ते। मध्यमवृद्धस्तु स्वप्रवर्तकस्य गवानयनप्रवर्तने तात्पर्यमव-गत्य गवानयनादौ प्रवर्तते। तत्र च प्रवृत्त्यनुकूलव्यापारस्येच्छा-रूपत्वेऽपि वेदस्यानादितया पुरुषसम्बन्धाभावाद्वेदेन प्रतीयमानः प्रवृत्त्यनुकूलव्यापारः प्रवर्तनाबोधकलिङादिशब्दनिष्ठ एवेत्यवश्य-मभ्युपगन्तव्यम्। अत एव 'अभिधाभावनामाहुरन्यामेव लिङादयः' इत्युक्तिरपि सङ्गच्छते। तथा हि—अभिधाभावनेत्यत्र द्वयी गतिः संभवति। अभिधा चासौ भावना चेत्येका गतिः, अभिधाया भावनेत्यन्या। तत्राद्ये अभिधीयत इत्यभिधा प्रवर्तना, सैव

---

[1] तन्त्रवार्तिकम्. अ. २ पा. १ अधि. १.

पुरुषप्रवृत्तिं भावयतीति भावना भवति। अथवा अभिधा हीष्टसाधनत्वस्याभिधानम्। सैव पुरुषप्रवृत्तिं भावयतीति भावनापदेनाभिधीयते। द्वितीयपक्षे तु अभिधत्त इत्यभिधा शब्दः। तस्य पुरुषप्रवृत्तौ कर्तृत्वं प्रतिपद्यमानस्य व्यापारो भावनेत्यर्थः प्रतीयते। पक्षद्वयेऽप्यस्मिन् शब्दभावना शब्दव्यापार एव भवति। तथा च शब्दस्य स्वव्यापाराभिधायकत्वस्यानुपपन्नतया न युज्यत एवास्य प्रवर्तकत्वाभिधानम् ॥

किं च शब्दभावनायाः प्रवर्तकत्वं किं ज्ञाततया अज्ञाततया वा? न तावद्द्वितीयः पक्षो युज्यते; अज्ञातायास्तस्याः प्रवर्तकत्वे सर्वेषामपि सर्वदा प्रवृत्तिप्रसङ्गात्। आद्यपक्षेऽपि किं शब्दभावनायाः स्वतो ज्ञातायाः प्रवर्तकत्वम्? परतो ज्ञाताया वा? आद्ये आत्माश्रयः। परतो ज्ञानपक्षेऽपि तस्याप्यन्यापेक्षायामनवस्था स्यात् ॥

ननु शब्दभावनाया न शब्देन शक्त्याऽभिधानम्। अपि तु लक्षणयैव। तथा च को दोष इति चेत्; मैवम्—वृत्तिद्वयकल्पनाप्रसङ्गात्। तथा हि—लिङादियुक्तवाक्येषु भावनाद्वयमवगम्यते। शब्दभावना अर्थभावना चेति पूर्वाचार्याभिधानादुभयमपि शब्दगम्यमेवेत्यभ्युपगन्तव्यम् ॥

न चात्र द्वयोरप्यभिधया बोध्यत्वमुपपद्यते। 'अन्यायश्चानेकार्थत्व' मिति न्यायेनाभिधया युगपदनेकार्थबोधनाऽसंभवात्। शब्दभावनाया लक्षणाबोध्यत्वम्, अर्थभावनायाश्चाभिधाबोध्यत्वमित्यपि नोपपद्यते। सकृदुच्चरितशब्देऽनेकवृत्त्यभ्युपगमे स एव दोषः। उक्तश्चायमत्र मूले 'सकृदुच्चरितः शब्दो न वृत्तिद्वयमर्हति' इत्यनेन। अत्रान्येऽपि विरम्यव्यापारादयो दोषा मूल एव स्पष्टाः ॥

## अभिप्रायस्य प्रवर्तकत्वशङ्कासमाधाने

वैशेषिकादयस्तु वेदस्येश्वरकर्तृकत्वं मन्यमाना गामानयेत्यादिवाक्यश्रवणसमनन्तरं मध्यमवृद्धस्य गवानयने प्रवृत्तिदर्शनाद्व्युत्पन्नस्य प्रवृत्त्यदर्शनाच्च पराभिप्रायस्यैवावगतस्य प्रवर्तकत्वं मन्यन्ते। तदपि अभिप्रायस्य पदार्थवाक्यार्थान्यतरत्वासंभवान्नोपपद्यते। तथा हि—परप्रयुक्तवाक्यात्पराभिप्रायोऽवगम्यमानः किं पदार्थत्वेनावगम्यते? उत वाक्यार्थत्वेन? नाद्यः, गामानयेत्यादि-

वाक्येषु गवादिपदानां गोत्वाद्यर्थाभिधायकत्वेनाभिप्रायाभिधायकत्वासंभवात्। न द्वितीयः। वाक्यार्थो ह्यन्विताः पदार्थाः, पदार्थानामन्वयो वा स्यात्। अभिप्रायस्य चोभयविधत्वाभावान्न वाक्यार्थत्वं युज्यते ॥

न चाभिप्रायस्य पदार्थवाक्यार्थान्यतरत्वेन प्रतीत्यभावेऽपि 'विमतवाक्यं विशिष्टाभिप्रायवद्भवितुमर्हति, वाक्यत्वात्, सम्मतवाक्यवदि' त्यनुमानेनाभिप्रायज्ञानं भवतीति वाच्यम्; विकल्पासहत्वात्। तथा हि—किमनुमानेनाभिप्रायविशेषोऽनुमीयते? उत तत्सामान्यम्? न तावदभिप्रायविशेषस्यानुमितिः संभवति। दृष्टान्ताभावेन विशेषव्याप्त्यग्रहणात्। अभिप्रायसामान्यानुमानेन प्रवर्तमानस्य गामनयेति वाक्यादश्वानयनेऽपि प्रवृत्त्यापत्तेः। अतो नाभिप्रायस्य प्रवर्तकता ॥

## इच्छायाः प्रवर्तकत्वाशङ्कासमाधाने

ननु जानाति, इच्छति, यतते, इत्येवं ज्ञानेच्छाकृतीनां नियतक्रमदर्शनात्क्रमस्य च हेतुहेतुमद्भावनिबन्धनतयेच्छातः प्रवृत्त्युपपत्तेरिच्छा प्रवर्तिकेति युक्तमिति चेत्;—सत्यमिच्छानन्तरं प्रवृत्तिः प्रकाशते। सा त्विच्छायाः सत्तामात्रेण संभवति, न तु वाक्यार्थतया ज्ञायमानत्वेन। अस्मिंश्च शास्त्रे वाक्यार्थतया ज्ञायमानमेव प्रवर्तकतया विचार्यते। अतो नेच्छापि प्रवर्तिका ॥

## गुरुमते प्रवर्तकत्वेन शास्त्रतात्पर्यविषयः

किं तर्हि ज्ञायमानतया प्रवर्तकमिति चेत्—अत्र गुरुमतानुयायिनस्तु—शब्दार्थप्रतिपत्तेः शक्तिग्रहणपूर्वकत्वे न कोऽपि विप्रतिपद्यते। शक्तिग्रहणं च लोके वृद्धव्यवहारनिबन्धनमेवोपलभ्यते। वृद्धव्यवहारस्य कार्यावलम्बित्वेनोपलब्धेः कार्यमेव वाक्यार्थः। तच्च पुरुषं प्रवर्तयति। तथा हि—व्युत्पित्सुर्हि गामानयेत्याद्युत्तमवृद्धवाक्यश्रवणसमनन्तरं गवाद्यानयनरूपकार्ये प्रवर्तमानं मध्यमवृद्धं पार्श्वस्थ एव समुपलभ्य 'गामनयेत्युत्तमवृद्धवाक्यश्रवणसमनन्तरमेव प्रवर्तमानस्य प्रवृत्तिः शक्तिग्रहणपूर्विका, प्रवृत्तित्वात्, स्वप्रवृत्तिवदि' त्यनुमानेनोत्तमवृद्धप्रयुक्तवाक्यस्य गवानयनरूपकार्यमेव वाक्यार्थ इति गृह्णाति। ततश्च मध्यमवृद्धप्रवृत्तिहेतुभूता मध्यमवृद्धस्य

बुद्धिरुत्तमवृद्धवाक्यहेतुका भवितुमर्हति, असति निमित्तान्तर उत्तम-वृद्धवाक्यश्रवणसमनन्तरभावित्वादि' त्यनुमानेन मध्यमवृद्धबुद्धे-रुत्तमवृद्धवाक्यहेतुकत्वमनुमाय गामानयन्तं मध्यमवृद्धमव-लोक्यगामानयेतिवाक्यादनिर्धारितपदार्थविशेषं गवानयनरूप कार्यं वाक्यार्थं इति प्रतिपद्यते । पदार्थविशेषप्रतिपत्तिस्तु पदान्तरप्रक्षेप-पूर्वपदपरित्यागरूपावापोद्धाराभ्यां प्रतिपदमर्थविशेषप्रतिपत्तेर्भवति । तथा हि—उत्तमवृद्धो हि स्वप्रयुक्तगामानयेतिवाक्यश्रवणसमनन्तरं मध्यमवृद्धेन गामानीतां दृष्ट्वा पुनरपि तं "गां बधाने" ति नियुङ्क्ते । तच्छ्रुत्वा मध्यमवृद्धोऽपि गां बध्नाति । गां मुञ्चेत्युक्ते मुञ्चति । ततश्च पार्श्वस्थो व्युत्पित्सुर्गोपदस्य सर्ववाक्येष्वनुवृत्तत्वात्तस्य सास्नादिमानर्थः, आनयेतिपदस्य व्यावृत्तत्वादानयनरूपकार्यमर्थः, बधानेत्यस्य बन्धनरूपकार्यमर्थः, मुञ्चेत्यस्य मोचनरूपं कार्यमर्थ इत्येवं प्रतिपदमर्थविशेषं प्रतिपद्यते । तथा च लोके कार्यरूपार्थस्यैव वाक्यार्थत्वावगमाल्लोकवेदाधिकरणन्यायेन (पू. मी. अ. १ पा. ३ अधि. ९) वेदेऽपि कार्यस्यैव वाक्यार्थत्वनिर्णयात्तस्यैव वाक्यात्प्रा-धान्येनावगतस्य प्रवर्तकत्वम् । इदं च कार्यं वेदे न क्रियारूपम् । तस्य प्रत्यक्षसिद्धत्वेनापूर्वत्वाभावात् । अतः क्रियाभिन्नं प्रमाणान्तरानव-गतत्वादपूर्वमिति तदिष्यते इति वदन्ति । उक्तं च शालिकानाथेन—

[1] " क्रियादिभिन्नं यत्कार्यं वेद्यं मानान्तरैर्न तत् ।
अतो मानान्तरापूर्वमपूर्वमिति गीयते ॥ " इति ।

एवं यागजन्यापूर्वस्यैव लिङर्थत्वेन वाक्यार्थत्वमाशङ्क्य नियोगस्यैव कार्यत्वं तस्यैव वाक्यार्थत्वं चेति तेनैवाभ्यधायि—

[2] " कार्यत्वेन नियोज्यं च स्वात्मनि प्रेरयन्नसौ ।
नियोग इति मीमांसानिष्णातैरभिधीयते ॥
कार्यस्यैव प्रधानत्वाद्वाक्यार्थत्वं च युज्यते ।
वाक्यं तदेव हि प्राह नियोज्यविषयान्वितम् ॥ " इति ॥

## वेदे क्रियाव्यतिरिक्तकार्यप्रतिपत्त्युपायः

" स्वर्गकामो यजेत " इत्यत्र स्वर्गकामपदस्य नियोज्याभिधाय-

---

[1] प्रकरणपञ्चिका. [2] प्रकरणपञ्चिका.

कत्वं षष्ठाद्ये स्वर्गकामाधिकरणे निरूपितम्। अत्र कामशब्दबलात् स्वर्गस्य साध्यत्वं प्रतीयते। स च स्वर्गः साध्यत्वेन नियोज्यविशेषणम्। नियोज्यश्च स्वकामनाविषयीभूतस्वर्गसाधनं कार्यत्वेनावगच्छन् देशान्तरे कालान्तरे देहान्तरे भोक्ष्यमाणफलं प्रति प्रत्यक्षायाः क्षणिकक्रियायाः साधनत्वासंभवं मन्वानस्तद्व्यतिरिक्तमेव लिङर्थरूपकार्यं नियोगापरपर्यायं स्वर्गसाधनमित्यवधारयति। तथा च स्वर्गकामपदसमभिव्याहारान्नियोज्यः स्वकामनाविषयीभूतस्वर्गसाधनत्वेनापूर्वाख्यकार्यं लिङादितः प्रतिपद्यत इत्युक्तं भवति। इदं चोचिवञ्चालिकानाथो वाक्यार्थमातृकायां "नियोज्यसम्बन्धसामर्थ्यात्कालान्तरस्थायि कार्यं क्रियातिरिक्तं लिङादिभिरेवोच्यते" इत्यादिना। समभिव्याहारस्यार्थविशेषप्रतिपत्तिनियामकत्वं [1]यववराहाधिकरणादौ (पू. मी. अ. १ पा. ३ अधि. ४) व्यक्तमेव॥

## द्वितीयपरिच्छेदप्रतिपाद्यम्

ग्रन्थेऽस्मिन् द्वितीयपरिच्छेदे स्वर्गकामपदसमभिव्याहारोपपत्त्यर्थं क्रियायाः स्थायित्वं परिकल्प्यतां किमपूर्वाख्यकार्येणेत्याशङ्क्य तस्याः स्थायित्वं निराक्रियते॥

## क्रियायाः स्थायित्वशङ्का

अत्रैवमाशङ्का—स्वर्गकामपदसमभिव्याहारादेव हि स्थाय्यपूर्वाख्यं कार्यं लिङाद्यभिधेयमिति गुरुमतसिद्धान्तः। यद्यदि स्वर्गकामपदमन्यथाप्युपपद्येत न स्यात्तदा तदनुरोधेनापूर्वाख्यकार्यस्य लिङर्थता। तथा हि—साध्यस्वर्गविशिष्टो हि नियोज्यः स्वकामनाविषयीभूतस्वर्गसाधनं कार्यत्वेनावगच्छन् क्षणभङ्गुरायाः क्रियायाः कालान्तरभाविस्वर्गादिरूपफलसाधनत्वानुपपत्त्या तस्या एव स्थायित्वपरिकल्पनया कालान्तरभाविस्वर्गादिफलसाधनत्वमवगन्तुमर्हति। न च क्रियायाः फलविनाश्यत्वस्य प्रत्यक्षसिद्धतया तस्याः स्थायित्वं प्रत्यक्षविरुद्धमिति वाच्यम्। कालान्तरभाविफलसाधनी-

---

[1] अत्रादिपदेनोक्ताधिकरणं ग्राह्यम्.

भूतक्रियायास्तादृशफलेनैव विनाश्यत्वाभ्युपगमात्। न हि क्रियायाः क्षणिकत्वं स्थायित्वं वा स्वाभाविकम्। अपि तु स्वजन्यफलनिबन्धनमेव तद्वाच्यम्। तद्यत्र स्वानन्तरभाविफलजनकत्वावगमस्तत्र तादृशफलेनव तादृशफलजनकक्रियाया नाशः। यत्र च क्रियायाः कालान्तरभाविफलजनकत्वावगमस्तत्र कालान्तरभाविफलेनैव तादृशक्रियाया नाशः। तदेवं क्रियायाः स्वोत्पाद्यफलविनाश्यत्वस्वाभाव्यात् प्रकृते कालान्तरभाविफलपर्यन्तं क्रियायाः सत्वस्यैष्टव्यतया तस्याः स्थायित्वाभ्युपगमो युज्यते॥

किं च 'वरं धर्मिकल्पनातो धर्मकल्पना' इति न्यायेन फलसाधनत्वेन सिद्धाया एव क्रियायाः स्थायित्वरूपधर्ममात्रकल्पनं समुचितम्। न स्थायित्वविशिष्टापूर्वाख्यधर्मिकल्पनम्॥

यद्यप्यपूर्वाख्यकार्यस्य लिङाद्यभिधेयत्वान्न कल्प्यता। तथापि शब्दार्थप्रतिपत्तेः शक्तिग्रहणपूर्वकत्वाल्लिङादीनां चापूर्वे शक्तिग्रहाभावात्तेषामपूर्वाभिधायकत्वं लोकविरुद्धमेव। लिङादीनां शक्तिग्रहापेक्षयैवापूर्वाख्यकार्याभिधायकत्वेऽपि किं तेषां लोकतोऽपूर्वे शक्तिग्रहः? वेदतो वा? लोकतश्चेन्नापूर्वप्रतिपत्तिः संभवति। क्रियारूपकार्यस्यैव लोके लिङाद्यवगतत्वेन वेदेऽपि तस्यैव लिङाद्यर्थत्वस्य वाच्यत्वात्। तथा च तस्य प्रत्यक्षादिप्रमाणाधीनव्युत्पत्तिकत्वेन लिङाद्यभिधेयस्य मानान्तरामेयत्वरूपापूर्वत्वभङ्गापत्तिश्च। वेदतोऽपूर्वाख्यकार्यप्रतिपत्तिरित्यपि नाञ्जसम्। व्युत्पादकस्यैव लिङोऽभिधायकत्वप्रसक्त्याऽऽत्माश्रयदोषप्रसङ्गात्॥

न च तर्कपरामृष्टेऽपूर्वे लिङादीनां व्युत्पत्तिः। अतो न मानान्तरामेयत्वरूपापूर्वत्वस्य हनिरिति वाच्यम्। तथापि कार्यस्यापूर्वत्वानुपपत्तेः। तथा हि—ननु कोऽयं तर्को नाम? किमनुभवः? आहोस्वित्स्मृतिः? अनुभवश्चेत्कार्यस्योक्तापूर्वत्वं व्याहन्येत। स्मृतित्वपक्षे तु स्मृतेरनुभवजन्यसंस्काराधीनत्वेन स्वजनकसंस्कारार्थमनुभवस्य पूर्वमपेक्षितत्वात्कार्यस्य तद्विषयत्वस्यावश्यकतयाऽपूर्वत्वव्याहतिरेव। न चान्यविधं ज्ञानं गुरुमते प्रसिद्धम्। अतो नापूर्वाख्यकार्यस्य लिङाद्यभिधेयत्वम्। किंतु क्रियाया एव लिङ्वाच्यत्वम्। तस्या लिङ्वाच्यत्वे च लोकवेदयोरुभयोरप्येकविधस्यैव क्रियारूपकार्यस्य वाक्यार्थत्वं युज्यते। एवं च नियोज्याभिधायकस्वर्गकामपदस्य क्रियास्थायित्वकल्पनेऽप्युपपत्तिः संभवतीति चेत्—

## क्रियायाः स्थायित्वकल्पनानुपपत्तिः

अत्र गुरुमतानुयायिनः—न तावत्क्रियायाः स्थायित्वं प्रकल्प्य स्वर्गकामपदस्योपपत्तिः प्रतिपादयितुं शक्यते। क्रियायाः स्थायित्वानुपपत्तेः। तथा हि—प्रत्यक्षेण तावत्क्रियायाः क्षणिकत्वावगमात्तस्याः स्थायित्वकल्पनं प्रत्यक्षविरुद्धमेव। लोकतः क्रियायाः फलनाश्यत्वावगमेऽपि या क्रिया यत्र सम्बद्धा जायते सा तत्रैव फलं जनयित्वा विनश्यतीत्येवं दर्शनात् कारकाश्रितेनैव फलेन क्रियाया विनाशोऽभ्युपगन्तव्यः। "क्रियां कुर्वद्धि कारकम्" इति कारकलक्षणानुरोधेन क्रियां कुर्वत एव कारकत्वाद्यगानुष्ठानदशायां यत् आत्मनः कारकत्वमस्ति तत् स्वर्गात्मकफलभोगवेलायां तस्य नास्त्येव। तदानीं क्रियासम्बन्धाभावात्। अतः स्वर्गात्मकफलस्य कारकावस्थाश्रितत्वाभावान्न यागक्रियायास्तादृशफलविनाश्यत्वसंभवः॥

न च लोकेऽपि कथं कारकाश्रितस्यैव फलस्य क्रियानाशकत्वमिति वाच्यम्। क्रियायोगिन एव कारकतया क्रियायोगस्य च कारणमन्तरेण नाशासम्भवात्कारणमावश्यकम्। तच्च सम्बन्धिनाशो विरोधिगुणप्रादुर्भावश्चेति द्विविधं सम्भवति। तत्र विरोधिगुणप्रादुर्भावाभावात्सम्बन्धिनाश एवावशिष्यते। सम्बन्धिनौ चात्र क्रियात्मानौ। तत्रात्मनो नित्यत्वेन क्रियारूपसम्बन्धिन एव नाशो वक्तव्यः। स च विनैव कारणं नोपपद्यत इत्युत्पन्नेनैव फलेनोपपादनीयः। लोके तु फलोत्पत्तिक्षणे क्रियाकारकफलोभयसत्वसम्भवेन विद्यत एव फलस्य कारकाश्रितत्वम्। अतस्तेनैव फलेन क्रियाया विनाश इति युक्तमेव। यागक्रियायाश्च फलोत्पत्तिसमये कारकाश्रितत्वाभावान्न कारकाश्रितफलविनाश्यत्वोपपत्तिः। क्रियायाः स्थायित्वकल्पनेऽपि फलोत्पत्तिं यावत्क्रिया क्व वर्तते? किमात्मनि? उत ध्यवत्तादिद्रव्ये? अथवा तत्परमाणुषु? तत्र न तावदात्मनि क्रिया वर्तत इति युक्तम्। आत्मनो निष्क्रियत्वात्। ध्यवत्तादिद्रव्याश्रितत्वं तु ध्यवत्तादिद्रव्यस्याग्निना भस्मीभावादेवानुपपन्नम्। परमाणुनिष्ठत्वे तु तस्या आत्मनि फलजनकत्वं नोपपद्यते। क्रियाया आश्रयान्तरे फलजनकत्वासम्भवात्। अतः क्रियायाः स्थायित्वकल्पनं न युक्तिपथमर्हति। किं तु कार्यात्मकस्थाय्यपूर्वस्यैव फलजनकत्वमुपपद्यते॥

किं च यागस्वर्गयोः साध्यसाधनभावावेदकश्रुतिबलादेव यागक्रियायाः स्थायित्वं कल्पनीयम् । तच्चान्योन्याश्रयदोषवशान्न सिद्ध्यति । क्षणिकक्रियायाः कथं कालान्तरभाविस्वर्गजनकत्वमित्युक्ते स्थायित्वादिति वक्तव्यम् । स्थायित्वं च कथमित्युक्ते कालान्तरभाविफलसाधनभावेनेत्येवमन्योन्याश्रयदोषस्य विस्पष्टत्वात् । अतः 'स्वर्गकामो यजेत' इत्यादिवाक्यैरवगम्यमानः कामनाविषयीभूतस्वर्गादिविशिष्टो नियोज्यो देशान्तरकालान्तरदेहान्तरभाविस्वर्गादिरूपफलसाधनं कार्यत्वेनावगच्छन् यागादिक्रियायाः क्षणभङ्गुरत्वेन स्थायित्वानुपपत्त्या ततोऽन्यदेव कार्यत्वेन प्रतिपद्यते। तदेव लिङाद्यभिधेयम् । अपूर्वाख्यकार्ये व्युत्पत्त्यसम्भव इत्येतदपि न। पूर्वजन्मजनितवेदार्थानुभवोत्थवासनाया इदानीन्तनवेदाध्ययनेनोद्बुद्धतया तज्जन्यस्मृत्याऽपूर्वाख्यकार्यस्य विषयीकरणात्तर्कितत्वसम्भवेन व्युत्पत्तिसम्भवात् । बालस्यापि स्तन्यपानादौ प्राग्भवीयानुभवमूलकवासनयैव प्रवृत्तिरुपपाद्यते । सङ्केतग्राहकतर्कस्य प्रमाणत्वाभ्युपगमेऽपि न दोषः । शक्तिग्राहकप्रमाणातिरिक्तप्रमाणान्तरामेयत्वमपूर्वत्वमिति निर्वचनसम्भवेनापूर्वत्वस्याप्युपपत्तेः ॥

न चापूर्वस्य फलसाधनत्वाङ्गीकारे तस्य प्राधान्येन वाक्यार्थत्ववर्णनं नोपपद्येतेति वाच्यम् । नियोज्याभिधायकस्वर्गकामपदसमभिव्याहारबलात्क्रियातिरिक्तस्थाय्यपूर्वस्य फलेनोपस्थाप्यमानस्य कृतिसाध्यतया प्राधान्येन लिङाद्यभिधेयत्वसम्भवात् ॥

## वाक्यभेदाशङ्कासमाधाने

ननु "यजेते" त्यत्रापूर्वं कृतिसाध्यतयाभिधीयते। "स्वर्गकाम" इत्यत्र च स्वर्गोऽपि कामनाविषयत्वेनाभिधीयते । तदेवं साध्यद्वयं प्रतिपादयदेकं वाक्यं भिद्येत । वाक्यभेदस्य च 'सम्भवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यते' इतिन्यायेन दुष्टत्वावगमादिति चेत्— सत्यं "यजेत स्वर्गकाम" इत्यत्रापूर्वं स्वर्गश्चेति साध्यद्वयं प्रतीयते। तथापि स्वर्गात्मकसाध्यस्य नियोज्यविशेषणत्वेनैवाभिधानादपूर्ववत्प्राधान्येनानभिधानान्न वाक्यभेदापादकत्वम् । वाक्यभेदस्तु यत्र प्राधान्येन साध्यद्वयं प्रतीयते तत्र भवति। नात्र स्वर्गापूर्वयोः

प्राधान्येन प्रतीतिरस्ति । अतो न वाक्यभेदावकाशः । अथवा अपूर्वस्वर्गयोरेकलोलीभावेनैकसाध्यत्वान्न वाक्यभेदः । यद्वा अपूर्वरूपसाध्यं फलपर्यन्तं विवर्धते जातिरिव व्यक्तिपर्यन्तम् । अतो मुख्यविवृध्याऽपि न साध्यद्वयविरोधः । किं च गर्भदासाय भृतिदानादिनोपकुर्वतोऽपि स्वामिनो यथा न प्राधान्यपरित्यागः तद्वदपूर्वस्यापि स्वसिद्धावनुकूलव्यापाराय कामिनियोज्याय स्वर्गादिफलं प्रयच्छतो न प्राधान्यपरित्यागः सम्भवति । क्रियास्थायित्वपक्षे स्थायित्वरूपधर्मकल्पनाप्रयुक्तलाघवसम्भवेऽपि प्रत्यक्षविरोधादिनैकविधदोषोपलब्धेः 'त्यजेदेकमि' ति न्यायेन लाघवमुपेक्ष्य धर्मिकल्पन एव श्रेयः समीक्ष्यापूर्वाख्यकार्यमेव लिङाद्यभिधेयमास्थेयमिति वदन्ति ॥

## तृतीयपरिच्छेदप्रतिपाद्यम्

ग्रन्थेऽस्मिन् तृतीयपरिच्छेदे यागस्य फलसाधनत्वोपपत्तये व्यापारतयाऽपूर्वकल्पनमेव लघीय इति विप्रतिपत्तिर्निरस्यते ॥

## भावनाया वाक्यार्थत्ववादिनां मतम्

भावनाया वाक्यार्थत्ववादिनस्तु— 'यजेत स्वर्गकामः' इत्यादौ लिङा लिङ्क्षेन शब्दभावनोच्यते । आख्यातत्वेन चार्थभावना । सा च स्वभावतः साध्यं, साधनं, इतिकर्तव्यता, चेत्यंशत्रयमाकाङ्क्षति । तत्र शब्दभावनायाः साध्याकाङ्क्षायां साध्यसाधनेतिकर्तव्यताविशिष्टार्थभावना साध्यत्वेनान्वेति । करणाकाङ्क्षायां च लिङ्ज्ञानं करणन्वेन । इतिकर्तव्यताकाङ्क्षायां चार्थवादोपस्थितप्राशस्त्यज्ञानमितिकर्तव्यतात्वेन । अर्थभावनायाः साध्याकाङ्क्षायां स्वर्गकामादिपदोपात्तस्वर्गादिकं स्वतः पुरुषार्थत्वात्साध्यत्वेनान्वेति। करणाकाङ्क्षायामेकपदश्रुत्या धात्वर्थः करणन्वेनात्वेति। इतिकर्तव्यताकाङ्क्षायां च प्राच्योदीच्यप्रयाजाद्यङ्गरीतेः करणत्वेनान्वयः। तथा च "स्वर्गकामो यजेते" तिवाक्यात्स्वर्गभाव्यकयागकरणकप्रयाजादीतिकर्तव्यताकार्थभावना शब्दभावनाप्रयोज्येत्येवं बोधस्यानुभविकतया भावनाया एव वाक्यार्थत्वम्। अत एव यागस्य श्रुतकरणत्वनिर्वाहायापूर्वं कल्प्यत इति वदन्ति ॥

## भावनाया वाक्यार्थत्वानङ्गीकारे युक्तिः

अत्र गुरुमतानुयायिनस्तु—यदि "स्वर्गकामो यजेते" त्यादौ यागस्य करणत्वं शब्देनैवाभिधीयेत स्यात्तदा यागकरणकभावनाया लिङर्थत्वेन वाक्यार्थत्वं, करणत्वोपपत्त्यर्थमपूर्वकल्पनं च। न चैतत्संभवति। अयोग्यतया यागकरणत्वस्य शब्देनानभिधानात्। यथा हि वह्नेः सेकसाधनत्वमयोग्यत्वेन शब्दो नाभिधत्ते तथैव कालान्तरभाविफलं प्रति क्षणभङ्गिनो यागस्य करणत्वं शब्दो नाभिधत्ते। अर्थभावनाया भाव्याकाङ्क्षायां स्वर्गस्य भाव्यत्वेनान्वय इत्यपि न। अपूर्वाख्यकार्यस्य लिङाद्यभिधेयत्त्वात्तेनैव भावनाया भाव्याकाङ्क्षापरिपूरणसम्भवात्॥

न च गुरुमते लिङादेरपूर्वमात्रवाचित्वात्कथं भावना लिङर्थ इति वाच्यम्। प्रधानभूतापूर्वोपसर्जनतया लिङादेरर्थभावनाभिधायकत्वस्य तैरप्यङ्गीकृतत्वात्। तथा च भावनायां स्वर्गस्य भाव्यत्वाभावाद्यागस्यापि स्वर्गसाधनत्वं नोरीकर्तुं शक्यते। कथं तर्हि धात्वर्थस्य सम्बन्ध इति चेत्; अर्थभावनाख्यकृतिविषयत्वेनैवेति वदन्ति॥

अयमाशयः—प्रथमं तावत् यागस्य शब्दतः करणत्वं न प्रतीयते। किन्त्वाकाङ्क्षानुरोधेनैव पदार्थानामन्वयो वक्तव्यः। आकाङ्क्षा च लिङ्प्रत्ययार्थभूतेऽपूर्वे कृतिसाध्यतयावगते सति कृतिस्वरूपनिरूपणाय प्रथमं किंविषयककृतिसाध्यमित्याकारिका जायते। न तु कथमिति प्रकाराकाङ्क्षा। अज्ञाते स्वरूपे प्रकारस्यानाकाङ्क्षितत्वात्। जातायां च तथाविधाकाङ्क्षायां प्रकृत्यर्थभूतो याग एव "यागविषयकृतिसाध्यम्" इति कृतिस्वरूपमवच्छिन्दन् विषयत्वेनान्वेति। अतो विषयत्वेनान्वयः शाब्दः। तदुक्तमभियुक्तैर्विषयस्वरूपनिरूपणावसरे [1]"विषयिणं विषिण्वन्ति अनुबध्नन्ति स्वरूपतो निरूपणीयं कुर्वन्तीति यावत्" इति। एवं कृतिस्वरूपनिरूपणाकाङ्क्षायां यागकृत्यपूर्वाणां क्रमेणान्वयः। पश्चात्त्वभाव्यस्यापूर्वस्य कथं कृतिसाध्यत्वमित्याकाङ्क्षायां यागद्वारेणेत्यघटमानं कृत्यपूर्वसंसर्गं मध्ये स्थित्वा घटयन् यागो घटकत्वेनान्वेतीति कृतिसाध्ययागसाध्यतया कृति-

---

[1] साङ्ख्यतत्त्वकौमुदी श्लो. ५.

यागापूर्वाणां क्रमेणान्वयः संभवति । इत्थं चावच्छेदकत्वरूप-विषयत्वमेव घटकत्वमिति पर्यवस्यति । व्यक्तं चेदं प्रकरणपञ्चिकायाम्—"विषयत्वेनान्वितस्य करणत्वेनान्वय इति न यागस्यादौ करणत्वेनान्वयः" इत्यादिना । भवनाथमिश्रैरपि शब्दान्तराधिकरणे—

> कृतितत्साध्यमध्यस्थो यागादिर्विषयो मतः ।
> कार्ये सङ्घटिताकारे करणत्वेन सम्मतः ॥

इत्यभिहितम् । यागस्य च प्रथमं शब्दात्करणत्वानवगमेप्यौपादानिकस्य तस्योपपन्नतया न किं चिदनुपपन्नम् । उपादानं चाभिधानाभिधेयानुपपत्तिबलायातकल्पनात्मकम् । नियोगस्य च लिङाद्यभिहितस्य यागादिकरणं विनाऽपर्यवसानात् स स्वपर्यवसानाय धात्वर्थस्य करणत्वमाक्षिपतीति भवत्येव यागादेरौपादानिकी करणत्वप्रतीतिरिति ॥

## नियोगपक्षे यागस्य करणत्वसमर्थनम्

ननु यागस्य करणत्वाभावेऽपि नियोगाख्यकार्यस्य काऽनुपपत्तिरिति चेत्; अत्रोच्यते — स्वर्गोद्देश्यका हि स्वर्गकामसमवेतकृतिः स्वर्गसाधनस्य स्वर्गोद्देशप्रवृत्तपुरुषकृतिव्याप्यत्वानुपपत्त्या स्वर्गसाधनमेव नियमेन व्याप्नोति। नियोगश्च स्वर्गं प्रतिकरणत्वेन यागमनुसन्धत्ते । करणत्वेनानभिसंहितस्य च स्वर्गकामकृतिव्याप्यत्वरूपविषयत्वाभावात् । तदभावे च नियोगस्य विषयनिरूपितकृतिसाध्यत्वेनाभिधानं नोपपद्यत एव । अतश्च विध्याक्षेपबलादेव यागस्य फलकरणत्वमभिसन्धीयते । तेन च फलं प्रति करणत्वेनाभिसंहितस्यैव यागस्यापूर्वकृतौ विषयत्वेनान्वयः सिध्यतीति ॥

## करणत्वसाधनत्वयोर्भेदनिरूपणम्

ननु यागस्य कालान्तरभाविफलं प्रति साधनत्वासंभवे करणीभूतस्य यागस्य विषयत्वेनान्वय इत्यपि न युज्यते । साधनत्वकरणत्वयोर्भेदाभावादिति चेत्; मैवम्; करणत्वं हि साधनत्वाद्भिद्यत एव । तथाहि—करणत्वं तावन्न साधनत्वव्याप्यम् । किन्तु

"क्रियां कुर्वद्धि कारकम्" इति कारकलक्षणानुरोधेन क्रियाघटितमेव तत्। साधनत्वं तु कारणत्वावान्तरमेव। तच्चानन्यथासिद्धनियतपूर्वक्षणवर्तित्वमित्यनयोर्भेदः। क्रियाघटितत्वं तु षण्णामपि कारकाणां विद्यत एव। स्पष्टं चेदं सोदाहरणं "स्नाति तीर्थे" इत्यादिमूले तद्व्याख्यायां च। अतश्च यागस्यापूर्वसाधनत्वाभावेऽपि क्रियाद्वारकं करणत्वमदुष्टमेव। साधनत्वस्य चोत्पादनक्रियाद्वारकत्वोक्तावप्याकाङ्क्षानुसारेणैवान्वयो वक्तव्यः। वाक्यार्थश्च न साधनमाकाङ्क्षति। कृतिसाध्यमित्युक्ते किंविषयकृतिसाध्यमिति कृतिस्वरूपनिरूपणापेक्षा प्रथमं जायते। न तु कथमिति प्रकारापेक्षा। ज्ञाते हि स्वरूपे प्रकारोऽपेक्ष्यते। तथाच यागविषयकृतिसाध्यमिति यागस्य प्रथमं विषयत्वेनान्वयः। न साध्यत्वेन। अनपेक्षितत्वात्। अनन्तरं चाभाव्यस्यापूर्वस्य कथं कृतिसाध्यत्वमित्यपेक्षायां यागद्वारेति यागस्य घटकत्वम्। कृतिसाध्यत्वात्। अतो न साधनत्वं वाक्यार्थेऽपेक्ष्यते। करणत्वापेक्षा त्वन्वयानुप्रविष्टतयैवोपपादनीया। न चास्ति सा प्रकृते। यद्यपि करणत्वमशब्दार्थत्वादाकाङ्क्षयाऽन्वेतुमसमर्थमेव। तथापि विध्याक्षेपरूपोपादानतस्तत्संभवः सुलभ एव। तथा च "यजेत स्वर्गकामः" इत्यादौ यागादेर्लिङाद्यभिहितनियोगविषयावच्छिन्नकृत्याश्रयीभूतनियोज्यकाम्यभूतस्वर्गार्थप्रवृत्तकृतिव्याप्यत्वरूपकरणत्वस्य न काप्यनुपपत्तिः। एवं च लोकवेदयोः सर्वत्र कार्यस्य वाक्यार्थत्वाविशेषेऽपि वेदे तस्य स्थायित्वमपूर्वत्वं च विमर्शतः सिध्यतीति पूर्वोक्तविशेषो न विस्मर्तव्यः। व्यक्तश्चायमर्थः —

> व्युत्पत्तिरपि कार्यार्थे व्यवहारानुसारिणी।
> किं तु निर्धारणामात्रं वेदवाक्यविमर्शजम्॥

इति शालिकातद्व्याख्यानयोः॥

## सिद्धार्थे व्युत्पत्तिशङ्का

वेदान्तिनस्तु—यदि लोके वृद्धव्यवहारवशाद्व्युत्पित्सोः कार्य एव व्युत्पत्तिस्तदा वैदिकवाक्यानामपि यया कयाचन विधया कार्यपरतैव स्यात्। नचैवम्। किं तु लोके व्युत्पित्सोः "पुत्रस्ते जातः" इत्यादौ पुत्रजन्मरूपसिद्धार्थेऽपि शब्दानां शक्तिग्रहदर्शना-

द्वेदान्तानामपि सिद्धरूपब्रह्मणि शक्तिग्रहः संभवत्येव। नच लोके सिद्धपरवाक्यस्यैवाप्रयोग इति वाच्यम्। तदुपलब्धेर्विस्पष्टत्वात्। तथा हि—देशान्तरे पुत्रजननसमनन्तरमलक्तकाद्यङ्कितपुत्रपदं पटं तत्पित्रे कुमारजन्मोत्सवसंसूचनाय श्वशुराद्यो वार्ताहारेण प्रेषयन्ति। वार्ताहारश्च तं पटं गृहित्वा जनकाभ्याशमागत्य जनकाय पुत्रपदाङ्कितं पटं प्रदर्श्य "दिष्ट्या वर्धसे चैत्र! पुत्रस्ते जातः" इति वदति। वार्ताहारेण सहैवागतस्य व्युत्पित्सोः सिद्धेऽपि व्युत्पत्तिर्भवति। सम्मतश्चायं क्रमः पूर्वाचार्याणामपि। तदुक्तं मूले—

"दृष्टचैत्रसुतोत्पत्तेस्तत्पदाङ्कितवाससा।
वार्ताहारेण यातस्य परिशेषाद्विनिश्चितिः॥ इति

अत्र व्युत्पित्सुर्वार्ताहारोक्त्यनन्तरं पितरि मुखप्रसादमुपलभ्य तेन तस्मिन् हर्षमनुमिनोति। निमित्तान्तरस्य चादर्शनात्तत्कालं वार्ताहारनिवेदितपुत्रजनेरेव हर्षहेतुत्वं निश्चिनोति। एवं वार्ताहारेण पित्रे "कन्या ते गर्भिणी"त्युक्ते वार्ताहारेण सहागतो व्युत्पित्सुः पितरि तादृशवाक्यश्रवणसमनन्तरं मुखमालिन्यमवलोक्य तेन तत्कारणत्वेन दुःखमनुमिनोति। तथा च पितरि सुखदुःखयोः कारणान्तरादर्शने सति वार्ताहारोक्तिश्रवणसमनन्तरमेव मुखविकासमुखमालिन्ययोर्दर्शनात् तद्धेतुभूतपुत्रजननकन्यागर्भरूपावर्थौ पित्रा वार्ताहारवाक्यादेव प्रतिपन्नाविति सिद्धार्थेऽपि वाक्यतात्पर्यावगमात्सिद्धरूपब्रह्मप्रतिपादकत्वं वेदान्तानामपि युक्ततरमेवेति वदन्ति॥

## सिद्धार्थे व्युत्पत्तिनिरासः

अत्र गुरुमतानुयायिनस्तु—"गामानये"त्यादौ सर्वत्र वाक्ये कार्यस्यैव वाक्यार्थत्वावधारणात्पुत्रजननप्रतिपादनपरे 'पुत्रस्तेजात' इत्यादावपि कार्याभिधायकपदस्य कार्यरूपार्थस्यैव वाऽध्याहारेण कार्यपरत्ववर्णनमेव समुचितम्। दृश्यते च लोके द्वारस्य संवरणविवरणान्यतरेच्छया 'द्वारम्' इति शब्दप्रयोगः। अत्र संव्रियतां विव्रियतामित्येवं संवरणादिकार्यवाचकपदस्य संवरणादिरूपार्थस्यैव वाध्याहरेण कार्यप्रतिपादकत्वं वाक्यस्यावगम्यते। एवं

पुत्रस्ते जात इत्यादिवाक्येष्वपि ' तं पश्य गृहाणे 'त्येवं दर्शनादिरूप-कार्याभिधायकशब्दस्य दर्शनादिरूपकार्यस्यैव वाध्याहारेण कार्य-परत्वसंभवान्न सिद्धार्थे पदानां शक्तिग्रहः संभवति । वेदान्त-वाक्यानां च ' सत्यं ज्ञानमनन्त ' मित्यादीनां कर्मविध्यपेक्षित-कर्तृप्रतिपत्त्युपयोगित्वेन कार्यपरत्वप्रतिपादनसंभवात् । ज्ञान-काण्डस्य कर्मकाण्डात्पृथक्छास्त्रत्वेऽप्युपासनादिविधिशेषत्वस्य ब्रह्मण्यप्युपपत्तेः सर्वत्र कार्यान्वितत्वेनैव पदार्थावगम इति वदन्ति ॥

## तुरीयपरिच्छेदप्रतिपाद्यम्

ग्रन्थेऽस्मिन् तुरीयपरिच्छेदे स्वर्गकामपदस्य कर्तृपरत्वेन नियोज्यपरत्वाभावान्न तत्समभिव्याहारबलादपूर्वाख्यनियोगस्य लिङाद्यभिधेयत्वमित्याशङ्का निराक्रियते ॥

## स्वर्गकामपदस्य कर्तृपरत्वाशङ्का

' यजेत स्वर्गकामः ' इत्यादौ भावार्थाधिकरणन्यायेन धात्वर्थस्य साध्यत्वात् सिद्धसाध्यसमभिव्याहारे च " सिद्धं साध्यायोपदिश्यत " इति न्यायेन धात्वर्थस्य साध्यत्वेनाभिधानात्स्वर्गकाम-पदार्थस्यापि तदानुगुण्येनैवान्वयो वाच्यः । स्वर्गकामपदार्थस्य च कर्तृत्वेन साध्यभूतधात्वर्थान्वये सत्यानुगुण्यं भवति । न नियोज्यत्वेनान्वये । स्वर्गकामस्य कर्तृत्वेनान्वये च स्वर्गस्य कर्तृ-समवेतकामनाविशेषणत्वेनोपसर्जनतयान्वयो वाच्यः । पुरुषार्थतया प्रधानस्यापि स्वर्गस्योपसर्जनत्वं त्वेवं सङ्गच्छते । स्वर्गकामपदं हि स्वर्गे कामः कामना यस्य सः, स्वर्गं कामयते वेत्येवं द्वेधोपपद्यते । पक्षद्वयेऽपि कामनाया एव प्राधान्यात्तद्विशेषणीभूतस्य स्वर्गस्यो-पसर्जनत्वमेव । स्वर्गस्य च कामनोपसर्जनत्वादेव स्वर्गकामपदं कर्तृसमर्पकं भवति ॥

किं च ' यजेत स्वर्गकामः ' ' आसीरन् वृद्धिकामाः ' इत्यादा-वाख्यातात्कर्तृसङ्ख्यानुविधानं तावदवगम्यते । न चेदं स्वर्गकामादि-पदस्य नियोज्यपरत्वे युज्यते । अतः स्वर्गकामपदं कर्तृपरमेव । न नियोज्यपरम् । नियोज्यस्यानुपादेयतया तद्गतसङ्ख्याया ग्रहैक-त्वाधिकरणन्यायेनाविवक्षितत्वापत्तेः ॥

## कर्तुरपि नियोज्यत्वाव्याहतिशङ्का

ननु नियोज्यस्य नियोज्यत्वाकारेणानुपादेयत्वेऽपि तस्यैव फलसिद्धौ कर्तृत्वावश्यंभावादाख्यातोपात्तसङ्ख्यानुविधानस्य नानुपपत्तिरिति चेत्—सत्यं नियोज्योऽपि फलसिद्धौ कर्ता भवति। तथापि धातूपात्ते व्यापारे तस्य कर्तृत्वं नास्ति। आख्यातश्च धातूपात्तकर्तृगतामेव सङ्ख्यामभिवदति। यथा पचतीत्युक्ते पाककर्तुरेकत्वमाख्यातेन बोध्यते। न गमनादिकर्तुः। एवं च स्वर्गकामादिपदस्य यागादिक्रियाकर्त्रभिधायकत्वान्न तत्पदं नियोज्यं समर्पयति। तथा च नियोज्यसमभिव्याहाराल्लिङोऽपूर्ववाचकत्वमित्यनुपपन्नमेवेति चेत्—

## स्वर्गकामपदस्य कर्तृपरत्वनिरासः

अत्र गुरुमतानुसारिणस्तु—स्वर्गस्य स्वतः प्रीतिरूपत्वेन पुरुषार्थतया स्वत एवेच्छागोचरस्य तस्य 'परनिष्पत्तये नेष्टः' इति न्यायेन कामनाविशेषणत्वमयुक्तमेव। यद्यपि स्वर्गकामपदेन कामनाविषयत्वेनोपसर्जनतयैव स्वर्गः प्रतीयते। तथापि कामनां प्रति कर्मीभूतस्वर्गस्य कामनाविषयतया कृतिसाध्यत्वेन प्राधान्यं स्वत एवापततीत्यत एव स्वर्गकामनावतः कर्तृत्वं नोपपद्यते। स्वर्गकामश्च कर्तृत्वाभावेऽपि कालान्तरभाविस्वर्गं कामयमानस्तत्साधनसाध्यमपूर्वं कार्यत्वेनावगच्छन् नियोज्यत्वेनान्वेति। उक्तं चैतत्—'नियोज्यः स च कार्यं यः स्वकीयत्वेन बुध्यते" इत्यनेन। 'सिद्धं साध्यायोपदिश्यते' इति न्यायश्चापूर्वस्य लिङादिना कृतिसाध्यतयाभिधानादितरस्य तदानुगुण्येनान्वयादस्माकमपीष्ट एव। अधिकारवाक्ये स्वर्गपदसमभिव्याहारात्तत्र स्वर्गस्यैव साध्यत्वेनान्वयः, इतरस्य च तदानुगुण्येनैवान्वयः। अन्यत्र तु क्रियाया एव साध्यत्वादितरस्य तदानुगुण्येनान्वयोऽस्तीति न भावार्थाधिकरणस्य प्रमेयालाभ इति वदन्ति॥

## कर्तृनियोज्ययोर्वैलक्षण्यम्

ननु साध्यस्वर्गवैशिष्ट्यस्य कर्तृनियोज्ययोरविशेषे व्यापारविशेषाविष्टतया कथं तयोर्भेदः सिध्यतीति चेत्—अत्रोच्यते—ममेदं

कार्यमित्येवं बोधो नियोज्यस्य व्यापारः । धात्वर्थभूतक्रियानुष्ठानं कर्तुर्व्यापारः । अतो नानयोरेकत्वं संभवति । आत्मीयत्वेनावगम्यमाननियोगरूपकार्येण नियोज्यस्यान्वयः, अनुष्ठीयमानक्रियया च कर्तुरन्वय इत्यनयोरन्वयवैलक्षण्यमपि स्फुटमेव ॥

## नियोज्यपक्षे आख्यातोपात्तसङ्ख्यान्वयोपपत्तिः

आख्यातोपात्तसङ्ख्यायाश्च निराश्रयत्वेनावस्थित्यनुपपत्तेः स्वाश्रयकर्त्राक्षेपादाक्षेपलभ्यकर्तृसङ्ख्यानुविधानादपि स्वर्गकामपदस्य नियोज्यपरत्वे नाख्यातोपात्तसङ्ख्यान्वयानुपपत्तिर्बाधिका । तथा च स्वर्गकामपदं कृतिसाध्यतया लिङा प्रतीयमानस्यापूर्वस्य कृत्याश्रयाकाङ्क्षायां कृत्याश्रयत्वेन नियोज्यं समर्पयतीति नियोज्याभिधायकमेव, न कर्त्रभिधायकमिति स्थितमेव स्वर्गकामपदस्य नियोज्याभिधायकत्वम् । उक्तं च मूले—

"तत्स्वर्गकामशब्दोऽयं कृतेराश्रयभावतः ।
नियोज्यमेवाभिधत्त इति कर्तुर्न वाचकः ॥" इति

## कार्याख्यापूर्वस्यौपस्थितिकोपसर्जनत्वशङ्कासमाधाने

ननु नियोज्यस्य 'ममेदं कार्य' मित्यवगतिर्भवति । ममेत्यत्र षष्ठी च नियोज्यकार्ययोः सम्बन्धमन्तरेणानुपपद्यमाना तयोः स्वस्वामिभावसम्बन्धं बोधयति । तथाच स्वत्वेनोपस्थितस्य कार्यस्य गुणत्वमेष्टव्यमेव । उपलभ्यते च 'चैत्रस्य गावः' इत्यादौ स्वत्वेनोपस्थितानां गवां स्वामिनं चैत्रं प्रति गुणत्वमिति चेत्—सत्यं षष्ठ्या स्वामित्वं नियोज्यस्य प्रतीयते । तच्च कृतिं प्रत्येव । न कार्यं प्रति । मत्कृतिसाध्यमित्येवं नियोज्यस्य स्वामित्वेन कृत्यैवान्वयदर्शनात् । कार्यं प्रति तु नियोज्यस्य गुणत्वेनान्वयेऽपि नात्यन्तिकगुणत्वरूपशेषत्वमस्ति । नियोज्य एव मत्फलसाधनत्वान्मदर्थमिदं कर्मेत्यनुसन्धानात् फलोद्देश्यककृतिव्याप्ये कर्मणि स्वामी भवन्नधिकार्यपि भवति । तस्यैव च पश्चात्क्रियानुष्ठातृत्वलक्षणं कर्तृत्वमप्युपपद्यते । अश्रुतनियोज्यकेषु च विश्वजिदादिवाक्येषु नियोज्यस्याक्षेपादेव लाभसंभवात् श्रुतनियोज्यकवाक्येष्विव कार्यप्राधान्य-

मव्याहतमेव। अध्ययनविधौ तु नियोज्याश्रवणेऽपि "तमध्यापयीते"ति विधिना प्रेरितोऽध्यापक एव स्वस्याध्यापकत्वसिद्ध्यर्थं माणवकमुपनीय वेदमध्यापयतीति न नियोज्यपरिकल्पनाऽपेक्ष्यते ॥

## गुरुमते विधिवाक्यार्थः

अत्रैवं गुरुमते वाक्यार्थप्रक्रिया—"ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादौ यजेतेत्यत्र लिङ्प्रत्ययेन कृतिसाध्यतयाऽपूर्वमभिधीयते। तत्र कृतेस्तत्साध्यस्य कर्तृसङ्ख्यायाश्च शब्दार्थत्वेऽपि "यत्परः शब्दः स शब्दार्थः" इति न्यायेन प्राधान्येनापूर्वस्य वाक्यार्थत्वम्। कृत्यभिधानं तु कार्याभिधानेनैव लभ्यत इति "अनन्यलभ्यः शब्दार्थः" इति न्यायेन कार्यस्य प्राधान्येन प्रत्ययार्थत्वे कृतिसङ्ख्ययोरुपसर्जनत्वमेकेनैवाभिधाव्यापारेणावगम्यते। व्यापारान्तराभ्युपगमे विरम्य व्यापारापत्तेः। अर्थद्वयस्यैकव्यापारेण शब्दतात्पर्यविषयत्वेऽपि गोत्वगोव्यक्त्योरिव प्रधानोपसर्जनभावोऽविरुद्ध एव। शब्दस्य तथाविधसामर्थ्यावधारणात्। तेन लिङ्प्रत्ययस्य कार्याभिधायकत्वेऽवधारिते यजिप्रकृतिस्तदाकाङ्क्षितविषयं समर्पयति। तथा च यजेतेत्यनेन यागविषयककृतिसाध्यमिति वाक्यार्थबोधः पर्यवस्यति। पूर्णायां च कृतिविषयाकाङ्क्षायां स्वर्गकामपदं कृत्याश्रयं नियोज्यमभिधत्ते। ज्योतिष्टोमेनेत्यत्र च प्रकृत्या यागपरिच्छेदाय तन्नामाभिधीयते। तृतीया चौपादानिकं यागकरणत्वमनुवदति। एवं च "स्वर्गकामनियोज्याश्रितज्योतिष्टोमनामकयागविषयककृतिसाध्यमपूर्वमिति वाक्यार्थः पर्यवस्यतीति हृदयम्॥

## मीमांसाया उपयोगः

सर्वोऽपि लोकः सुखमिच्छन् तत्साधनेषु प्रवर्तते, दुःखमसहमानस्तत्साधनेभ्यो निवर्तत इति नात्र किञ्चिदविदितं विशेषु निवेदनीयमस्ति। सुखसाधनं च धर्मो दुःखसाधनं चाधर्म इत्यपि मतिमतामतिरोहितमेव। तौ च धर्माधर्मौ वेदेन प्रयोजनमुद्दिश्य विधीयमानो निषिध्यमानश्चेति वेदवादिनामुद्घोषः। धर्मश्च जगतः स्थितिहेतुरित्यनुश्रूयते "धर्मो विश्वस्य जगतः प्रतिष्ठा" इत्यादिना। तस्यैव रक्षितस्य स्वानुष्ठानात्सर्वलोकपरि-

रक्षकत्वमपि " धर्मो रक्षति रक्षितः " इत्यादिना विज्ञायते । अतो धर्मः सर्वस्वमास्तिकमहाशयानाम् । धर्मे पुरुषमतिविपर्यासश्च " धर्मं प्रति विप्रतिपन्ना बहुविदः " इत्यादिना भाष्ये " मतिर्बहुविदां पुंसां संशयान्नोपजायते " इत्यादिना वार्तिके च व्यक्तं प्रत्यपादि। एवंभूतं चैनं भ्रमप्रमादादिदूषितचेतसो न यथावदवगन्तुं पारयन्तीति मन्वानः परमकारुणिको भगवान् जैमिनिमहर्षिर्धर्मस्यास्य न्यायतो निर्णयाय " अथातो धर्मजिज्ञासा " इत्यारभ्य " अन्वाहार्ये च दर्शनात् " इत्यन्तैः सूत्रजालैर्मीमांसां प्राणैषीत्। न्यायविरोधितं चार्थं न पुरुषमतिविभ्रमादिकमाविलयितुमलं भवति। न्यायविशुद्धिश्च मीमांसयैव सञ्जायते । सा चापरिचिता दुष्परिचिता वा न न्यायविशोधनाय प्रभवति । प्रत्युतान्याय्यार्थोपादनेन पुरुषं निश्रेयसाद्वियोजयेदेव। अत एवोचुस्तत्रभवन्तो भट्टपादाः—

" मीमांसायां त्विहाज्ञाते दुर्ज्ञाते वाऽविवेकतः ।
न्यायमार्गे महान् दोष इति यत्नोपचर्यता ॥ " इति ।

अतो धर्माधर्मप्रतिपादकवेदार्थनिर्णायकन्यायान् व्युत्पादयन्ती मीमांसा पुरुषस्याल्पमतेर्धर्माधर्मयोर्यथावत्प्रतिपत्तावतितरामुपकरोति ॥

## मीमांसाया ग्रन्थान्तरेषु व्याप्तिः

धर्माधर्मव्यवस्थापकन्यायप्रकाशकं हीदं मीमांसाशास्त्रं शास्त्रान्तरेष्वप्यतितरामाद्रियते । तथा हि—पूज्यतमो व्यासमहर्षिः स्वकीयशारीरकशास्त्रे " हानौ तूपायनशब्दशेषत्वात्कुशाछन्दस्तुत्युपगानवत्तदुक्तम् " (ब्र. सू. अ. ३ पा. ३ सू. २६) " प्रदानवदेव तदुक्तम् " (ब्र. सू. अ. ३ पा. ३ सू. ४३) " अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् " (ब्र. सू. अ. ३ पा. ३ सू. ५०) " मन्त्रादिवद्वाऽविरोधः " (ब्र. सू. अ. ३ पा. ३ सू. ५६) " अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् " (ब्र. सू. अ. ३ पा. ३ सू. ३३) इत्येवमाद्यनेकेष्वधिकरणेषु पूर्वमीमांसाधिकरणन्यायदृष्टान्तेन तत्तद्वेदान्तवाक्यार्थनिर्णयप्रतिपिपादयिषया ' तदुक्तम् ' इत्यादिपदैर्मीमांसाधिकरणान्युदाहार्षीत् । शङ्करभग-

वत्पादाद्याचार्या अपि तदीयभाष्यभाषणावसरे तदुक्तमित्यादिपदानां व्यासमहर्षेः पूर्वमीमांसाधिकरणसिद्धन्यायप्रतिपादने तात्पर्यमिति तत्तत्पूर्वमीमांसासूत्रनिर्देशपुरस्सरमावेदयामासुः । तद्व्याख्यातारश्च वाचस्पतिमिश्रप्रमुखास्तत्तत्सन्दर्भोचितमीमांसान्यायान् तत्तद्व्याख्यानावसरे सम्यगुपापादयन्निति नात्र तद्व्युत्पादने प्रयतामहे ॥

योगीश्वरो याज्ञवल्क्यमहर्षिरपि स्वनामाङ्कितस्मृतावाचारादिधर्मनिर्णायकत्वेनानेकान् मीमांसान्यायानङ्ग्यकार्षीदिति तदीयस्मृतिव्याख्यादिभ्यो विस्पष्टं विज्ञायते । तथाहि ;—

"स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारतः" ।

इत्युक्त्या महर्षिरयं यत्र स्मृतिद्वयस्य परस्परं विरोधः प्रसज्यते तत्र वृद्धव्यवहारलब्धन्यायानुरोधेनैव विरोधस्य परिहरणीयतां विस्पष्टमवर्णयत् । ते च न्याया उत्सर्गापवादादिरूपाः पूर्वमीमांसायां प्रसिद्धा एवेति लक्ष्मीविज्ञानेश्वराभ्यां मिताक्षरातद्व्याख्यानयोः स्पष्टीक्रियते स्म । मिताक्षराकारो हि धर्मन्यायरहस्यवित् "यत्र स्मृत्योः परस्परतो विरोधस्तत्र विरोधपरिहाराय विषयव्यवस्थापनादावुत्सर्गापवादादिलक्षणो न्यायो बलवान् समर्थः। स च न्यायः कुतः प्रत्येतव्य इत्यत आह— व्यवहारत इति । व्यवहारात् वृद्धव्यवहारात्' इत्यादिग्रन्थेन वृद्धव्यवहारसिद्धोत्सर्गापवादादिरूपन्यायमाश्रित्य स्मृतिद्वयविरोधस्थलेऽर्थो निर्णेतव्य इति स्मृत्यर्थमवर्णयत् । तद्व्याख्याने च बालम्भट्ट्याख्ये लक्ष्मीविरचिते उत्सर्गेतिप्रतीकग्रहणपूर्वकं "सामान्यस्य विशेषो बाधक इत्येवं सामान्यापवादलक्षणो न्यायस्त[1]न्त्रान्तरे प्रसिद्ध इत्यर्थः" इत्यादिग्रन्थेनोत्सर्गापवादशब्दार्थविवरणपुरस्सरमुत्सर्गापवादादिलक्षणन्यायस्य पूर्वमीमांसारूढत्वमवाचि। स्मृतिग्रन्थोऽयं प्रायेण मीमांसान्यायजटिल इत्येतद्ग्रन्थावलोकयितॄणां व्यक्तमेव । अत्रैको न्यायो दिक्प्रदर्शनाय व्युत्पाद्यते ॥

---

[1] पूर्वमीमांसायामित्यर्थः

## स्मृतौ मीमांसान्यायव्युत्पादनम्

### दृष्टादृष्टयोर्दृष्टपरिग्रहन्यायः

न्यायोऽयं पूर्वमीमांसायां षष्ठाध्यायप्रथमपादे सप्तमाधिकरणे व्युत्पादितः। सोऽत्र याज्ञवल्क्यस्मृतौ व्यवहाराध्याये २२ श्लोके लक्ष्मीविरचितबालम्भट्टयां "दृष्टे सत्यदृष्टाश्रयणस्यान्याय्यत्वादि" ति ग्रन्थेन प्रकृतप्रमेयसंशोधनाय प्रत्यपादि। अत्र मूलम्—

"प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तिताः।
एषामन्यतमाभावे दिव्यान्यतममुच्यते॥" इति।

(या. स्मृ. व्य. श्लो. २२)

अस्यार्थस्तु—ऋणादानादिव्यवहारपदेषु सञ्जातविवादयोर्न्यायाधिकरणोपस्थितयोर्वादिप्रतिवादिनोर्व्यवहारे प्राड्विवाकेन निर्णेतव्ये निर्णायकप्रमाणत्वेन लेख्य-भोग-साक्षिण उपादेयाः। एषां लिखितभोगसाक्षिणामन्यतमस्यापि प्रमाणस्यालाभे दिव्यप्रकरणे वक्ष्यमाणानां तुलाग्निविषादिदिव्यप्रमाणानामन्यतमप्रमाणस्योपादानमिति। तत्र लेख्यं नाम ऋणादानादिव्यवहारविषयीभूतवस्तुनिर्देशविशिष्टमुत्तमर्णाधमर्णादीनां देशकालाद्युल्लेखसहितमधमर्णेन तत्पक्षीयेण वान्येन लिखितं पत्रम्। भोगो नाम विवादास्पदीभूतवस्तुविषयक उपभोगः। साक्षिणस्तु विवादकालोपस्थिता विवादपदद्रष्टारः प्रसिद्धा एव। अत्र च दृष्टविधया प्रमाणीभवतां लेख्यभोगसाक्षिणां मनुष्यकृतत्वनिमित्तेन मानुषप्रमाणत्वेन व्यपदेशः। दिव्यानां त्वदृष्टविधया प्रमाणीभवतां दिव्यप्रमाणत्वेन व्यपदेशः। अत्र लेख्य-भोग-साक्षिरूपप्रमाणत्रयेऽन्यतमस्योपायस्यासंभवे दिव्यप्रमाणप्रवृत्तिरिति यदुक्तं याज्ञवल्क्यमुनिभिस्तत्रेयमाशङ्का प्रसरति, तत्तत्प्रमाणानां परस्परनिरपेक्षतया वस्तुसाधकत्वेन समत्वे स्थिते दिव्यानां मानुषाणां वा प्रमाणानामविशेषेण प्रवृत्तेरेव न्याय्यत्वात् "मानुषप्रमाणासंभव एव दिव्यप्रमाणप्रवृत्तिरि"त्येतन्नियमनमयुक्तमिति। तथा हि—न तावदत्र दिव्यप्रमाणानां मानुषप्रमाणसापेक्षत्वम्, लिखित-भोग-साक्ष्यादिनैरपेक्ष्येणैव तेषां विवादास्पदीभूतार्थनिर्णायकत्वसंभवात्॥

न च साक्ष्यादिप्रमाणेनेव तुलादिप्रमाणेन साक्षादितिवृत्ता-ज्ञानात्तत्सहायेनैव तेषां प्रामाण्यं विज्ञायत इति साक्ष्यादिप्रमाणापेक्षया दिव्यप्रमाणस्य दौर्बल्यमेवेति वाच्यम् । तथात्वे भोगप्रमाणस्यापि साक्षादितिवृत्तज्ञापकत्वाभावेन साक्ष्यपेक्षया दुर्बलत्वापत्तेः । न हि साक्षिवद्वाग्व्यापारेण भोगस्येतिवृत्तज्ञापकत्वं संभवति, अचेतनत्वात् । लेख्यस्यापि वचनानुमापकत्वेन वचनरूपत्वासंभवात्साक्षादितिवृत्तज्ञापकत्वाभवेन साक्षिप्रमाणापेक्षया दुर्बलत्वमापद्येत । लिखितभोगयोः साक्ष्यपेक्षया दुर्बलत्वमिष्टमेवेति तु न युक्तम् । तथात्वे लिखितभोगदिव्यानां साक्ष्यपेक्षया दौर्बल्यविषये समानत्वेन "साक्ष्यभावे लिखित–भोग–दिव्येष्वन्यतमप्रमाणं ग्राह्यमि" त्येव वक्तव्यतया "लिखितभोगसाक्षिणामन्यतमाभावे दिव्यान्यतमं ग्राह्य" मिति याज्ञवल्क्योक्तेरसङ्गतिप्रसङ्गात् । एवं च मानुषप्रमाणानां दिव्यप्रमाणानां च परस्परं सापेक्षनिरपेक्षभावस्य प्रबलदुर्बलभावस्य वाऽभावेन प्रामाण्यांशे समानत्वे विद्यमाने 'मानुषप्रमाणाभावे दिव्यप्रमाणग्रहणं, 'दिव्यप्रमाणाभावे वा मानुषप्रमाणग्रहणमि' त्यत्र नियामकाभावेन सर्वविधव्यवहारेषु सर्वेषामपि प्रमाणानां तुल्यप्रवृत्तिकतैव युक्तेति प्राप्तम् । तथा च "एषामन्यतमाभावे दिव्यान्यतममुच्यते" इत्येवं मूलकारैर्मानुषप्रमाणासंभव एव दिव्यप्रमाणग्रहणमिति यदुक्तं तन्निर्युक्तिकमेवेतीदृग्विधाक्षेपसमाधानार्थमेव बालम्भट्टीये 'दृष्टे सत्यदृष्टस्यान्याय्यत्वात्' इत्युक्तम् ॥

अयमभिप्रायः—पूर्वोक्तानां मानुषाणां दिव्यानां वा प्रमाणानां वादिप्रतिवाद्यन्यतरपक्षसाधनद्वारा व्यवहारोपयोगित्वमिति तावन्निर्विवादम् । तत्र मानुषाणां प्रमाणानां दृष्टविधयैव वादिप्रतिवाद्यन्यतरपक्षसाधकत्वम् । न हि लिखितेन भोगेन साक्षिवचनेन वा तत्तत्पक्षे साधयितव्येऽदृष्टसिध्यपेक्षास्ति । दिव्यप्रमाणैस्तत्तत्पक्षसाधनं तु अदृष्टायत्तम् ॥

यद्यपि दिव्यप्रमाणान्तर्गते अग्निदिव्यादौ तप्तायःपिण्डधारणादिप्रसङ्गे निष्पद्यमानहस्तदाहतदभावादेः प्रत्यक्षत्वेन दृष्टद्वारैव दिव्यप्रमाणानां व्यवहारसाधनोपयोगित्वमित्याशङ्क्येत । तथापि तादृशदाहादाहाद्युपयोग्यदृष्टविशेषसूचनद्वारैव दिव्यप्रमाणस्य

व्यवहारनिर्णये प्रमाणत्वेन तस्य दृष्टद्वारकत्वोक्तिरनुपपन्नैव। यदि च दिव्यप्रमाणस्याग्निदिव्यादेरदृष्टद्वारकत्वं नाङ्गीक्रियते, तर्हि सत्यपक्षावलम्बिना वादिप्रतिवाद्यन्यतरेण क्रियमाणे तप्तायःपिण्डधारणे दृश्यमानो हस्तदाहाभावो दुरुपपाद एव स्यात्। न हि तादृशप्रसङ्गे वह्निस्वभावसिद्धस्य दाहकत्वस्य प्रतिबन्धेऽदृष्टादन्यत्किंचित्कारणं वक्तुं शक्यम्। किं च यदि दृष्टद्वारैव दिव्यप्रमाणानां व्यवहारोपयोगस्तर्ह्यग्निदिव्यादौ क्रियमाणस्य मण्डलोल्लेखन–देवतावाहन–तत्पूजनादेर्वैय्यर्थ्यमापद्येत। न हि देवताऽऽवाहनादेर्दृष्टं प्रयोजनमुपलभ्यते। अतो दिव्यप्रमाणानामदृष्टद्वारैव व्यवहारसाधनोपयोगितेत्येतन्निर्विवादम्। तथा च दृष्टविधया व्यवहारसाधनोपयोगिनां मानुषप्रमाणानामदृष्टविधया व्यवहारसाधनोपयोगिदिव्यप्रमाणापेक्षयाऽऽश्वासातिशयकारित्वेन प्रबलत्वान्मानुषाणामेव सति संभवे ग्रहणं युक्तम्। साक्षिवचनलेख्योपस्थापनादिना दृष्टप्रकारेण क्रियमाणे व्यवहारनिर्णये यावान्लोकविश्वासो भवति, न तावानदृष्टप्रकारानुसरणे भवतीति लोकसिद्धमेव॥

किं च शास्त्रैकप्रमाणकत्वाददृष्टस्य यत्रादृष्टकल्पनां विना गत्यन्तराभावस्तत्रैव तत्कल्पना युक्ता। तादृशीमेव कल्पनामनुमन्यते शास्त्रम्। यत्र तु दृष्टोपायेनापि कार्यसिद्धिस्तत्र बुद्धिपूर्वकं क्रियमाणामदृष्टकल्पनां नैव शास्त्रं सम्मनुते। अतश्च व्यवहारनिर्णयोपयोगितया वादिप्रतिवादिभ्यां क्रियमाणे स्वस्वपक्षसाधने दृष्टविधयोपयोगिनां साक्षिलेख्याद्युपायानामेव प्रथमतो ग्राह्यत्वेन तदसंभव एवादृष्टविधयोपयोगिनां तुलाग्न्यादिदिव्योपायानां ग्रहणमित्ययं युक्तिसम्मतोऽर्थः। अत एव तत्तत्क्रतुविधिभिर्विधीयमानानां क्रतूनामनुष्ठानायाग्निविद्यापेक्षायामध्ययनविधिसिद्धाया एव विद्याया आधानविधिसिद्धानां चाग्नीनां ग्रहणम्, न तु तदर्थमदृष्टोपायान्तरपरिकल्पनमित्युक्तं पूर्वमीमांसायाम्। इत्थमन्येऽप्युत्सर्गापवादादयो मीमांसान्यायाः शास्त्रान्तरेष्वर्थनिर्णायकतया व्युत्पादनीया इत्यलमनया न्यायव्युत्पादनदिक्प्रदर्शनसरण्या। सर्वथापि वाक्यार्थनिर्णये विद्यत एव महानुपयोगो मीमांसायाः।

## मीमांसान्यायानां लोके प्रचारः

लोकेऽपि मीमांसान्यायानुरोधेनैव सामाजिकव्यवहारा अन्ये च तादृशा यथासंभवं निर्णीयमाना दृश्यन्ते। तथा हि—समाजेष्वेकस्मिन् कार्ये जनानां विप्रतिपत्तौ बहुमतानुरोधेन (By the Majority) तत्कार्यं व्यवस्थाप्यते । इदं च कार्यव्यवस्थापनं "विप्रतिषिद्धसमवाये भूयसां स्यात्स्वधर्मत्वम्" (जै. सू. अ. १२ पा. २ सू. २४) इत्येतन्मीमांसाधिकरणसिद्धस्य 'न्यूनाधिकसङ्ख्याकविरोधेऽधिकसङ्ख्याकानुग्रहः' इति न्यायस्यानुमतं भवति ॥

एवं परस्सहस्रपुरुषपूर्णायां महत्यां सभायां पश्चादागतोऽपि महाराजः पुरस्क्रियमाणो दृश्यते । इदमपि "अङ्गगुणविरोधे तादर्थ्यात्" (जै. सू. अ. १२ पा. २ सू. २७) इत्येतत्पूर्वमीमांसाधिकरणसिद्धस्य 'गुणमुख्ययोर्मुख्यानुग्रहः' इति न्यायस्य सम्मतं भवति । इदमप्यत्र दिङ्मात्रमुपदर्शितम् । इत्थं प्रायशः सर्वेषामपि मीमांसान्यायानां लोकव्यवहारेषु समन्वयो भवत्येव ॥

## उपसंहारः

एवं च लौकिकशास्त्रीयव्यवहारेषु सर्वत्र व्यवहारनिर्णायकन्यायव्युत्पादकस्य मीमांसाशास्त्रस्यानितरसाधारणं माहात्म्यमित्युक्तिः स्वरूपकथनमेव । न लेशतोऽप्यतिशयवर्णनम् । सत्येवमीदृशस्य मीमांसाशास्त्रस्योपादेयतायां नापेक्ष्यतेऽन्यदसाधारणं किञ्चित्कारणम् । अतो लौकिकशास्त्रीयव्यवहारेषु न्यायनैपुण्याभिलाषिभिः सर्वैरपि मीमांसाशास्त्रे समादरो विधेय इति नात्रातीव विस्तरोऽपेक्ष्यते ॥

सर्वथा ग्रन्थोऽयमतितरां दुरवगाहस्य गुरुमतवाक्यार्थस्यावबोधनेन तन्मतव्युत्पित्सूनां नितान्तमुपकुर्यादेव ॥

## एतद्ग्रन्थसंस्करणे सङ्गृहीतान्यादर्शपुस्तकानि

ग्रन्थस्यास्य संस्करणे सङ्गृहीतेषु पञ्चस्वादर्शपुस्तकेषु—

क-संज्ञकं (A. 723) काकलपत्रात्मकं प्रायेण शुद्धमेकम् ।

ख-सञ्ज्ञकं (2177) तालपत्रात्मकं किञ्चित्त्रुटितं शुद्धमपरम् ।

ग-सञ्ज्ञकं (B. 377) काकलपत्रात्मकं नातिशुद्धमितरत् ।

ङ-संज्ञकं (B. 376) काकलपत्रात्मकं संशोधितमन्यत् ।

एतत्पुस्तकचतुष्टयमप्येतत्कोशागारस्थमेव ॥

घ-संज्ञकं (Madras) चेन्नपुरीस्थाड्यार् प्राच्यकोशागारादासादितं प्रायः शुद्धमेकम् ।

एवं पुस्तकपञ्चकसहायेन ग्रन्थोऽयं समशोधीति शम् ॥

इत्थं

सुधीविधेयः,

आर्. रामशास्त्री.

॥ श्रीः ॥

# सुवर्णमुद्रिकासहितवाक्यार्थरत्नस्थविषयसूची

## प्रथमपरिच्छेदः

## द्वितीयपरिच्छेदः

## तृतीयपरिच्छेदः

## चतुर्थपरिच्छेदः

# शुद्धाशुद्धपाठसूची

---

| अशुद्धः | शुद्धः | पृ. | पं. |
|---|---|---|---|
| निमित्ते हि | निमित्ते | ६ | २० |
| इत्येवमभिधाशब्द | इत्येवमभिधा शब्द | ९ | २६ |
| वाक्यर्थता | वाक्यार्थता | १३ | १७ |
| तदेव | तदेवं | १५ | २३ |
| वुपभुञ्जते | वुपभुञ्जते | १७ | ६ |
| ना[ष्या]त्माश्रय | ना[प्या]त्माश्रय | २४ | ३ |
| रापूर्वावाम | रापूर्वावगम | ४४ | ९ |
| प्रवृत्तेश्च दर्शना | प्रवृत्तेश्चादर्शना | ५२ | १९ |
| पदान्यत्र | पराण्यत्र | ५६ | ६ |
| क्रत्वफूर्व | क्रत्वपूर्व | ७२ | १८ |
| चौपादानिक फल- | चौपादानिकफल | ७७ | २५ |
| थोषमाह | दोषमाह | ७७ | २६ |

---

॥ श्रीः ॥

॥ श्रीगुरुभ्यो नमः ॥

# वाक्यार्थरत्नम्

## (सुवर्णमुद्रिकासहितम्)

### प्रथमः परिच्छेदः

[1] वन्दे रामं जगज्जन्मस्थितिसंयमकारणम् ।
विज्ञानानन्दवपुषं त्रय्यन्तमणिमन्दिरम् ॥

करयुगळयुगळ्या वित्तिमुद्राक्षमाले
कलशममृतपूर्णं पुस्तकं बिभ्रदाद्ये ।
स्फटिकविशदवर्णो भद्रपीठे निषण्णो
दिशतु विशदबुद्धिं दक्षिणामूर्तिदेवः ॥

कृष्णं गोविन्दमनिशं श्रीगोपीजनवल्लभम् ।
वन्दे पार्थरथारूढं ज्ञानमुद्रालसत्करम् ॥

सुवर्णपदसंहत्या मुद्रयाऽभीष्टया गुरोः ।
वाक्यार्थरत्नं सुधियां धृतये योजयाम्यहम्[2] ॥

इह खलु 'मङ्गळारम्भा ग्रन्थाः प्रचीयन्ते[3], निष्प्रत्यूहं परिसमाप्यन्ते चे'ति वचनेन प्रचिक्रमिषितस्य निरन्तरायपरिसमाप्तिप्रचयादिकं प्रयोजनमाशासानोऽभिमत-देवतोपासनात्मकं मङ्गळमादावाचरति—

**उपास्महे महो रामनामकं यन्नियोगतः ।
नियुक्तोऽधिकृतः कर्मकर्तै[4] ष्टफलमश्नुते ॥ १ ॥**

**महः उपास्मह** इत्यन्वयः । "तन्मह इत्युपासीत महान् भवति" इति श्रुतौ **महस्त्वेन** (महश्शब्द[5]गतत्वेन) उपासनाया महत्वरूप[6]फलैश्वर्यप्राप्तेरभिधानादत्रापि

---

1 आद्यं श्लोकद्वयं क. ख.—पुस्तकयोर्नोपलभ्यते. 2 एतत्पर्यन्तग्रन्थः घ.—पुस्तके नोपलभ्यते. 3 न्ते परिचीयन्ते चेति—क. 4 र्ता स्वफ—घ. 5 गम्यत्वे—क. घ. 6 पस्यैव प्रा—ङ.

महत्वापेक्षया ज्योत्स्नापरपर्यायं महः सेवामह इत्यर्थः । महःशब्दस्य सामान्यामि[1]धायितया निर्विशेष[2]सामान्यस्यापर्यवसानात्प्रकृतोपयोगि[3]तया विशेषमभिधत्ते—**रामनामकमिति** । रमयति [4]स्वोपासकान् आत्मप्रवणान् कुरुत इति रामः परमात्मा । यद्वा रमन्ते योगिनोऽस्मिन्निति रामः—

रमन्ते योगिनोऽनन्ते[5] नित्यानन्दे चिदात्मनि ।
इति रामपदेनासौ परं ब्रह्माभिधीयते ॥

इति वचनात् । राम इति नाम यस्य तद्रामनामकं महः ॥

ननु रामोपासनया किं प्रयोजनमभिगम्यत इत्यत्राह—**यन्नियोगत इति** । यस्य रामस्य, [6]नियोगतः आज्ञावशात्, नियुक्तः प्रेरितः, अधिकृतः कर्मणि प्राप्तैश्वर्यः, कर्मकर्ताऽनुष्ठाता, इष्टं स्वाभिमतं, फलमश्नुते प्राप्नोतीति । तेन रामोपासनयोपासकस्य यद्यदभीष्टं तत्फलं प्राप्यते, विभीषणसुग्रीवहनुमदादीनां रघुनायकनियोगानुसन्धानेन स्वाभिमतफलप्राप्तेः सार्वजनीनानुभवगोचरत्वादित्युक्तं भवति ॥

ननु रामोपासनं तन्त्रविरुद्धम् । नियोगप्राधान्यवादिभिरुपास्यविग्रहादिमद्देवताया अनङ्गीकारात् । रामश्च [7]'इन्दीवरदळश्यामः पद्मपत्रनिभेक्षणः' इत्यादिलक्षणसम्पन्नः । तथा च कथं संप्रदाया[8]नभिमतमनुसन्धीयत इत्यपि शङ्कां परिहरति—**यन्नियोगत इति** । [9]यद्राम[10]रूपनियोगादित्यर्थः । नियोगस्यापि परमेश्वररूपत्वेनैव क्रतु[11]फलदायकत्वम् । यत्तु देवताविग्रहनिराकरणं तदपि नियोगप्राधान्यप्रतिपादनार्थमेव । न तु देवतास्वरूपनिराकरणार्थम् । "यस्यै कस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्" इति वचनेन ध्यानस्याभिहितत्वात् । विग्रहाद्यभावे ध्यानानुपपत्तिप्रसङ्गात् । इह च यस्य परमेश्वरस्य रामपदाभिधेयस्य स्वरूपादेवावस्थाविशेषमभिगम्य नियोगसंज्ञामवतीर्णादपूर्वाख्यकार्यान्नियुक्तः ममेदं कार्य[12]मित्येव बुद्ध्वा नियोज्यत्वं प्राप्य समनन्तरं कार्यसाध्यफलसाधनभूतकर्मणि मादर्थ्यलक्षण[13]मधिकारमधिगत्य पश्चात्फलसाधनभूतां क्रियामनुष्ठाय समभिलषितं पुत्रपशु[14]स्वाराज्यादिकं फल[15]मधिगच्छतीति सम्प्रदायसम्मतमेवोच्यते । न तद्विरुद्धमिति न कश्चिद्दोषः । एतेन वक्ष्यमाणग्रन्थप्रतिपाद्यमपि प्रदर्शितं भवति ॥ १ ॥

---

1 मिधेयत—क. ख. 2 न्यापर्यवसानात्प्रकृतोपयोगिनं—क. ख. 3 गिनं वि—ङ. 4 पास्यान्—ख. 5 सत्यानन्दे—क. 6 नियोग आज्ञा तद्वशान्नि—घ. 7 नीलोत्पलदळश्यामः पुण्डरीकनिभेक्षणः—क. ख. 8 यविरुद्धमभिधीय—क. ख. 9 यस्माद्रा—क. ख. 10 मनियो—घ. 11 फलसाधकत्वात्—क. ख. 12 मिति बु—क. ख. 13 णमुपकारम—ख. ग. 14 शुस्वर्गराज्या—ङ. 15 मभिग—ग. घ.

अथ स्वग्रन्थं प्रत्यभिमुखानां प्रेक्षावतां प्रस्तुत[1]शास्त्रानुसारेणैवाशिषमाशास्ते—

**अस्तु तद्वस्तु धर्माख्यं स्वस्तिप्रदमनारतम् ।**
**वेदमस्तकवेद्यत्वं यस्य वेदविदो विदुः ॥ २ ॥**

धर्म इत्याख्या यस्य तद्धर्माख्यं तद्वस्तु, अनारतं सर्वदा, स्वस्तिप्रदं [2]कुशलप्रदायकं, 'स्वस्तीत्यविनाशिनामे' ति नैरुक्तैरभिधानात् । अस्त्विति सम्बन्धः । तदिति सर्वनाम्ना प्रसिद्धपरामर्शः कर्तव्यः । धर्माख्यस्य वस्तुनः कथं प्रसिद्धिरि[3]त्यत्राह—**वेदमस्तकेति** । निरपेक्षतया[4] वित्तिकरणं ब्राह्मणवाक्यमिह वेदशब्देनाभिधीयते । तस्य वेदस्य मस्तकमिव मस्तकं लिङ्पदं, तेन वेद्यत्वं अभिधेयत्वं, वेदविदो मीमांसकाः, यस्य धर्माख्यस्य वस्तुनो, विदुः कथयन्ति; तद्वस्त्वित्यर्थः । एतेन लिङ्वाच्यतया धर्मस्य मीमांसकैः प्रसिद्धेः प्रसिद्धं च धर्माख्यं वस्तु तदिति सर्वनाम्ना परामृश्यत इत्युक्तं भवति ॥ २ ॥

अथेदानीं कृतमङ्गळाचरणो भाविप्रयत्नस्य निरन्तरायपरिसमाप्तिं मत्वा ग्रन्थमारभते—

**गुरुतन्त्रमहाम्भोधिमवगाह्य समुद्धृतम् ।**
**वाक्यार्थरत्नं विद्वद्भ्यो ददाम्यहमुपायनम् ॥ ३ ॥**

गुरोः प्रभाकरगुरोः, तन्त्रं प्रभाकरशास्त्रं, तदेव च दुरवगाह्यत्वेन चापरिमेयत्वेन चाम्भोनिधिकल्पत्वेन चाम्भो[5]धिः, तमवगाह्येत्यनेन अम्भोधिवद्दुरवगाह्यस्यापि गुरुतन्त्र[6]स्यावगाहनेन [7]स्वमाहात्म्यमपि प्रकटितं भवति । समुद्धृतं सम्यगुद्धृतम् । अनेन शास्त्रे नानास्थानेषु विप्रकीर्णस्य वाक्यार्थोपयोगिप्रमेयस्य चिरन्तनप्रबन्धेषु सम्यगभिहितस्योद्धरणेनैकत्र सङ्कलय्य [8]कथनमेव क्रियते । न तु किञ्चित्परिकल्प्यते । अतः प्रामाणिकमेतदित्युक्तं भवति । वाक्यार्थरत्नमिति ग्रन्थनाम । तद्रत्नं यथा सर्वेषामुपादेयं तथेदमपि रत्नवच्छ्रेष्ठतया विदुषामुपादेयम् । अत एवोपायनं विद्वद्भ्यो ददामीत्युक्तम् । उपायनमुपदा । लोके तु यः कश्चिद्रत्नं लब्ध्वा अन्येभ्यो न प्रयच्छति, किन्तु रहसि गोपायति । अहं तु विद्वद्भ्यो ददामीत्युक्तं भवति । तथा च वाक्यार्थरत्नसंज्ञकं ग्रन्थं रचयामीति प्रतिज्ञातं भवति ॥ ३ ॥

---

[1] नुवादेनैवा—घ. [2] प्रदम्—घ. [3] त्यत आ—ग. ख. [4] प्रवृत्तिक—घ. [5] धिम—ङ. [6] स्य निरन्तरायपरिसमाप्तिं मत्वा ग्रन्थमवगाहनेनाऽस्य माहा—घ [7] स्वमहत्वम—क. ख. [8] कथनमात्रमेव—ङ.

*

नन्वस्य ग्रन्थस्य कृत्स्नशास्त्रप्रमेयसम्बन्धित्वाभावेन प्रकरणतयैकदेशसम्बन्धित्वेऽपि शास्त्रे प्रमेयान्तराण्यपि सन्ति, किमिति तदनिरूपणेन वाक्यार्थोपयोगिप्रमेयमेव निरूप्यत इत्यत्राह—

धर्मं च विषयीकृत्य मीमांसा वर्तते स च।
चोदनालक्षण इति भगवानाह जैमिनिः ॥ ४ ॥

श्रूयते वचनं वेदे यत्क्रिया[1]याः प्रवर्तकम्।
तच्चोदनेति मुनिना शबरस्वामिनेरितम् ॥ ५ ॥

प्रवृत्तिजनकं चार्थमभिधत्ते हि यद्वचः।
प्रवर्तकत्वं वाक्यस्य तस्य युक्तं न तु स्वतः ॥ ६ ॥

प्रवृत्तिजनकश्चार्थः को वेत्यत्र विचार्यते।
तत्र विप्रतिपद्यन्ते वादिनो बहुधा [2]तथा ॥ ७ ॥

'अथातो धर्मजिज्ञासा' (पू. मी. अ. १ पा. १ सू. १) इति धर्मस्य विचारविषयतया मीमांसारम्भं प्रतिज्ञाय [3] को धर्म इत्याकाङ्क्षायां, 'चोदनालक्षणोऽर्थो धर्मः'' (पू. मी. अ. १ पा. १ सू. २) इत्युक्तं भगवता मीमांसाशास्त्रकृता जैमिनिना। तत्र चोदनाशब्दार्थं विवृण्वता भाष्यकृता शबरस्वामिना 'चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः' (शा. भा. अ. १ पा. १ सू. २) इत्यभिहितम्। तत्र वचनस्य प्रवर्तकत्वं प्रवृत्तिहेतुभूतार्थाभिधायित्वे[4]नैव युज्यते। न स्वभावतः। इतरथा सर्वत्र वाक्यश्रवणमात्रेणापि प्रवृत्तिप्रसक्तेः। तेन प्रवृत्तिहेतुभूतार्थाभिधायित्वेनैव वाक्यं प्रवर्तकमिति वक्तव्यम्। ततश्च प्रवर्तकस्यैव वाक्यार्थत्वाद्वाक्यार्थोपयोगिप्रमेयमेव निरूप्यते ॥

एतदुक्तं भवति—यद्यपि [5] शास्त्रे प्रमेयान्तराण्यपि सन्ति। तानि तु तत्र तत्राधिकरणे पर्यवसितान्येव निरूपितानि। वाक्यार्थोपयोगिप्रमेयं [6] त्वनेकाधिकरणविप्रकीर्णत्वेन न पर्यवसितमेकत्र। तथा हि—"स्वर्गकामो यजेते" ति वाक्यस्य तावद्गुरुमते स्वर्गकामनियोज्याश्रितयागविषयकृतिसाध्यमपूर्वमित्यत्र कार्यरूपं लिङ्वाच्यमिति शास्त्रादौ, [7] तत्तु स्थायितया प्रमाणान्तराविषयत्वेनापूर्वमित्यपूर्वाधिकरणे, कृत्यवच्छेदकत्वेन यागस्य विषयत्वमिति शब्दान्तरनये, क्रियायाः स्थायित्वमनुपपन्नं कारकाश्रितफलविनाश्यत्वादिति बादर्यधिकरणे, फलं प्रति करणीभूतस्यैव यागस्या[8]पूर्वं प्रति विषयत्वमिति सर्वशक्तिनये, फलकरणत्वं चौपादानिकं, न शाब्दमिति लिप्सासूत्रे,

---

[1] यां—प्र. घ. [2] धाऽकथाः—घ. [3] य 'चो—ङ. [4] न यु—ङ. [5] शास्त्रान्तरे—घ. [6] त्वेकाधिकरणप्र—घ. [7] वस्तु—ङ. [8] वंकृतिं—प्र. घ.

स्वर्गकामस्य नियोगाश्र[1]यत्वाभावेन नियोज्यत्वमिति स्वर्गकामाधिकरणे, एवमनेकाधिकरणविप्रकीर्णत्वाद्वाक्यार्थोपयोगिप्रमेयस्य तस्य च शास्त्रे सर्वत्रोपयुक्तत्वात्तदेव प्रवृत्तिहेतुभूतार्थगोचरं वादिविप्रतिपत्ति[2] निराकरणपुरस्सरं प्रपञ्चयत इति वाक्यार्थप्रमेयमेवास्मिन् प्रकरणे प्रतिज्ञातवतः तात्पर्यमिति ॥ ४—७ ॥

वादिनां विप्रतिपत्तिमुपपादयितुं वेदान्तिनां मतमादावुपन्यस्यति—

**धात्वर्थस्येष्टहेतुत्वं केचिदाहुः प्रवर्तकम् ।**

इष्टसाधनभूतो धात्वर्थः प्रवर्तक इति वेदान्ति[3]नां मतम् । [4] (इष्टानिष्टप्राप्तिपरिहारयोरेव पुरुषार्थत्वेन तत्साधन एव लोके प्रवृत्तिदर्शनात् । वेदे च ‘ स्वर्गकामो यजेत ’ त्यत्र यागस्य स्वर्गसाधनत्वमवगम्यते । अतस्तदेव प्रवर्तकमिति भावः ॥

आचार्यमतमाह—

**प्रवृत्तिजनिकामाहुरपरे शब्दभावनाम् ॥ ८ ॥**

शब्दभावना प्रवर्तिकेति तान्त्रिका मन्यन्ते । आनयतीत्युक्ते प्रवृत्त्यदर्शनात् । आनयेत्युक्ते प्रवृत्त्यवगमादवगम्यते लिङादीनां तादृशी काचन शक्तिरस्तीति । सैव प्रवर्तिकेत्यर्थः) ॥ ८ ॥

वैशेषिकादिमतमाह—

**विज्ञाय वक्त्रभिप्रायं पुरुषो हि प्रवर्तते ।**
**अतः प्रवृत्तिजनकः स एवेत्यपरे जगुः ॥ ९ ॥**

वेदस्येश्वरप्रणीतत्वं मन्यमाना वैशेषिकादयो लोके गामानयेति वाक्यश्रवणसमनन्तरं मध्यमवृद्धप्रवृत्तिदर्शनात् अव्युत्पन्नस्य चाप्रवृत्तेरभिप्रायस्यैव प्रतीतस्य प्रवर्तकत्वं मन्यन्त इत्याशयः ॥ ९ ॥

न्यायैकदेशिनां मतमाह—

**विज्ञायाभिमतं वस्तु तदिच्छातः प्रवर्तते ।**
**पुमानतः प्रवृत्तेस्तु हेतुरिच्छेति केचन ॥ १० ॥**

यद्यपि ज्ञानानन्तरमेव प्रवृत्तिः, तथापीच्छाया अभावे प्रवृत्त्यदर्शनात् “ यदनन्तरं यद्दृश्यते तत्तस्य कारण ” मिति न्यायेन प्रवृत्तेरिच्छैव कारणमिति न्यायैकदेशिनः सङ्गिरन्त इत्यर्थः ॥ १० ॥

---

[1] श्रयाभावेन—क. [2] त्तिपु—क. [3] न्तिनो मन्यन्ते—घ. [4] अयं कुण्डलितः पाठः घ.—पुस्तके न दृश्यते.

इदानीं स्वसम्प्रदायमाह—

**गुरुस्तु लौकिके वृद्धव्यवहारं[रे] समीक्ष[क्ष्य]ते ।**
**प्रवृत्तिजनकं कार्यज्ञानमित्याह तद्यथा ॥ ११ ॥**

शब्दार्थप्रतिपत्तेः सङ्केतग्रहणपूर्वकत्वात्, सङ्केतग्रहणस्य [1]च वृद्धव्यवहारनिबन्धनत्वात्, वृद्धव्यवहारस्य च कार्यसमवलम्बितया दृष्टत्वात्कार्यमेव प्रवर्तकमिति गुरुसम्प्रदायविद इति भावः ॥ ११ ॥

अथ कोऽसौ वृद्धव्यवहारः, यद्वशात्कार्यमेव प्रवर्तकतयाऽभिहितमित्यत्राह—

**नियुङ्क्ते गामानयेति लोके कंचन कश्चन ।**
**गवानयनमुद्दिश्य स पुमांश्च प्रवर्तते ॥ १२ ॥**
**तत्रेत्थं पार्श्वतः स्थित्वा व्युत्पित्सुरधिगच्छति ।**

उत्तमवृद्धवाक्यश्रवणसमनन्तरं प्रवर्तमानं मध्यमवृद्धमुपलभ्य पार्श्वस्थस्य व्युत्पित्सोः कार्य एव व्युत्पन्नत्वात्तदेव प्रवर्तकमित्यर्थः ॥ १२ ॥

ननु व्युत्पित्सुः कथमनुमिनोतीत्याशङ्क्यानुमानप्रकारमाह—

**बुद्धिपूर्वेयमप्यत्र वृत्तिर्भवितुमर्हति ॥ १३ ॥**
**प्रवृत्तिहेतुतो यद्वन्मत्प्रवृत्तिः पुरातनी ।**

गामनयेत्युत्तमवृद्धवाक्यश्रवणसमनन्तरमेव प्रवर्तमानस्य प्रवृत्तिरिह पक्षः, तस्याः बुद्धिपूर्वकत्वं साध्यते प्रवृत्तित्वेन हेतुना, स्वप्र[2]वृत्तिर्दृष्टान्तः ॥ १३ ॥

ननु प्रवृत्तेर्बुद्धिपूर्वकत्वेऽपि कार्यस्य प्रवर्तकत्वसिद्धिः कथमित्यत्राह—

**इयं च बुद्धिर्युक्तैतद्वाक्यश्रवणहेतुका ॥ १४ ॥**
**असत्यन्यनिमित्ते हि यद्वाक्यश्रवणगामिनी ।**

आद्यानुमानेन प्रवृत्तेर्बुद्धिपूर्वकत्वे सिद्धे अनुमानान्तरेण बुद्धेर्वाक्यश्रवणहेतुकत्वं साध्यते । इयं च मध्यमप्रवृत्तिहेतुभूता मध्यमवृद्धस्य बुद्धिरेतद्वाक्यश्रवणहेतुका भवितुमर्हति । असति निमित्तान्तरे वाक्यश्रवणसमनन्तरभावित्वात् ॥ १४ ॥

अस्यानुमानस्य व्याप्तिमाह—

**यद्यस्यानन्तरं प्राप्तं तत्तज्जन्यं हि युज्यते ॥ १५ ॥**

व्याप्तिप्रदर्शनेनै[3]व समनन्तरभावि दृष्टान्ततया अवगन्तव्यम् ॥ १५ ॥

---

[1] च व्यवहाराधीन—क. ख. ग. [2] त्तिदृष्टान्तेन—क. ख. [3] व कारणस—घ.

कथमेतावता कार्यस्य प्रवर्तकत्वनिश्चय इत्यत्राह—

**इत्थं निश्चित्य पुरुषमानयन्तं तथैव गाम् ।**
**विलोक्यावैति वाक्यार्थं गवानयनकार्यताम् ॥ १६ ॥**

अथ चव्युत्पित्सुर्गामानयन्तं मध्यमवृद्धमवलोक्य गामनयेति वाक्यस्यानिर्धारितपदार्थविशेषं गवानयनरूपं कार्यं वाक्यार्थं इति प्रतिपद्यते ॥ १६ ॥

कथं तर्हि पदार्थविशेषप्रतिपत्तिरित्यत्राह—

**ततश्च गां बधानेति गां मुञ्चेति च वाक्यतः ।**
**प्रतिशब्दमथावापोद्धाराभ्या[1]मर्थनिर्णयः ॥ १७ ॥**

आवापो नाम पदान्तरप्रक्षेपः, उद्धारस्तु पूर्वपदपरित्यागः, ताभ्यां प्रतिपदमर्थविशेष प्रतिपत्तिः । तथाहि—गामनयेति वाक्यादानीतां गां दृष्ट्वा गां बधानेति नियुङ्क्ते, सोपि गां बध्नाति । गां मुञ्चेत्युक्ते मुञ्चति । ततश्च गोपदस्य सर्ववाक्येष्वनुवृत्तत्वात् तस्य सास्नादिमती व्यक्तिरर्थः । आनयेति पदस्य व्यावृत्तत्वादानयनरूपकार्यमर्थः । बधानेत्यस्य बन्धनमर्थः । मुञ्चेत्यस्य मोचनमित्येवं प्रतिपदमर्थविशेषं प्रतिपद्यते ॥ १७ ॥

एवं वृद्धव्यवहारबलात्कार्यरूप एवार्थे लोकव्युत्पत्त्यवगमात् वेदेऽपि तथैव कार्यं प्रवर्तकतयाऽङ्गीकर्तव्यमित्युपसंहरति—

**ततो लोकानुसारेण कार्यमेव प्रवर्तकम् ।**

ननु पूर्वोपन्यस्तानां मतानां परिपन्थितयाऽवस्थाने कथं कार्यमेव प्रवर्तकमिति मतसिद्धिस्तत्राह—

**न चेष्टहेतुतादीनां प्रवृत्तिं प्रति हेतुता ॥ १८ ॥**

सत्यम्, तानि मतानि निर्वहन्ति चेन्नास्मन्मतसिद्धिः । तान्येव तु न निर्वहन्तीत्यर्थः ॥ १८ ॥

तत्रादाविष्टसाधनता प्रवर्तिकेति मतं दूषयितुं किमिष्टसाधनतामात्रं प्रवर्तकं, उत धात्वर्थगतमिष्टसाधनत्वमिति विकल्पं मनसि निधाय आद्यं पक्षमुपन्यस्य दूषयति—

**इष्टसाधनताज्ञानं प्रवृत्तिं जनयेद्यदि ।**
**प्रवृत्तिं न कथं कुर्यादिन्दुमण्डल ईप्सिते ॥ १९ ॥**

इन्दुमण्डलादेरपि समीहितसाधनत्वात्तत्रापि प्रवृत्तिः स्यादिति भावः ॥ १९ ॥

---

1 र्थनिश्चयः—घ.

द्वितीयमनूद्य दूषयति—

यदि प्रवृत्तिहेतुः स्याद्धात्वर्थस्येष्टहेतुता ।
अतीतादौ च जनयेत्प्रवृत्तिं सेष्टहेतुता ॥ २० ॥

अतीतानागतवृष्ट्यादिधात्वर्थस्यापि समीहितसाधनत्वेन तत्रापि प्रवृत्तिर्भवेदित्यर्थः ॥ २० ॥

विशेषमाशङ्कते—

अथ कृत्यर्हधात्वर्थस्येष्टहेतुत्वमिष्यते ।
अकृत्यर्हतयाऽतीतं प्रवृत्तेर्विषयो न चेत् ॥ २१ ॥

कृतियोग्यधात्वर्थगतमिष्टसाधनत्वं [1]प्रवृत्तिहेतुः । अतीतवृष्ट्यादिरूपधात्वर्थस्य कृतियोग्यत्वाभावान्न प्रवृत्तिहेतुत्वमिति वैषम्यमित्यर्थः ॥ २१ ॥

तदेतद्दूषयितुं विकल्पयति—

कृतिजन्यत्वमर्हत्वं कृत्युद्देश्यत्वमेव[2] वा।

किमिदं कृतियोग्यत्वं कृतिजन्यत्वं वा कृत्युद्देश्यत्वं वेति विकल्पार्थः ॥

आद्यमनूद्य दूषयति—

यदि स्यात्कृति[3]जन्यत्वं तदतीतेऽपि विद्यते ॥ २२ ॥

अतीतादेरपि कृतिजन्यत्वेन तत्रापि प्रवृत्तिः स्यादेवेति भावः ॥ २२ ॥

द्वितीयमनूद्य स्वमताविरोधित्वेनाङ्गीकरोति—

अथोच्येतार्हता कृत्युद्देश्यतेति न तन्मतम् ।
गुरुतन्त्रविरोधि स्याद्गुरुणा हि समीरितम् ॥ २३ ॥
कृत्युद्देश्येष्टविज्ञानहेतुत्वात्कार्यधीरिति ।

शब्दभावना प्रवृत्तिहेतुरिति तान्त्रिकमतं दूषयितुमनुवदति—

यच्च प्रवर्तिका शब्दभावनेति समीरितम् ॥ २४ ॥
अयुक्तमेव तत्तस्याः शब्देनानभिधानतः ।

शब्देनाभिहितोऽर्थः प्रवर्तक इति वक्तव्यम् । शब्दभावनायास्तु । शब्दाभिधानगोचरत्वाभावेन प्रवर्तकत्वं न युज्यत इत्यर्थः ॥ २४ ॥

अनभिधानमेव कथं तत्राह—

यतः शब्दो नाभिधत्ते स्वयं व्यापारमात्मनः ॥ २५ ॥

शब्दस्य स्वव्यापारं स्वयमेवाभिधातुमक्षमत्वादिति भावः ॥ २५ ॥

---

[1] प्रवर्तकमिति—क. ख. [2] व हि—ङ. [3] तियोग्यत्वं—.ङ.

ननु कथं शब्दभावनायाः शब्दव्यापारत्वं, कथं वा शब्देनाभिधानं तत्राह—

अभिधाभावना ह्येषा गीयते शब्दभावना ।
सा च व्यापार इत्येवं व्याख्यातं पूर्वसूरिभिः ॥ २६ ॥

अयमभिप्रायः—शब्दभावना नाम अभिधाभावना। आचार्यैरुभयथाऽपि व्यवह्रियमाणत्वात् । तथा हि—लिङादियुक्तवाक्येषु द्वे भावने अवगम्येते। शब्दभावना अर्थभावना चेत्युक्तमेकत्र । अन्यत्र तु—

अभिधाभावनामाहुरन्यामेव लिङादयः ।
अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते॥ (तन्त्रवा. अ. २ पा. १ अधि. १)

इत्युक्तम् । तथा च भाव्यभवनसमर्थो भावकव्यापारो भावनेति भावनासामान्यलक्षणपर्यालोच[1]नयापि व्यापार एव शब्दभावना । तत्रापि व्यापार्यभूताया अर्थभावनायाः प्रकाशने उत्पादने वा समर्थस्य शब्दस्य व्यापार इत्येव लक्षणानुगतिर्वक्तव्या, ततो न शब्देनाभिधीयत इति ॥ २६ ॥

अथाऽभिधाभावनाशब्दार्थपर्यालोचनायामपि व्यापाररूपैव शब्दभावनेति वक्तुं पूर्वाचार्योक्तं "अभिधाभावनामाहु" रित्यस्य वार्तिकस्य व्याख्यानं प्रदर्शयति—

अभिधीयत इत्येवमभिधा सा प्रवर्तिका ।
सैव पुंसो भावयति प्रवृत्तिमिह भावना ॥ २७ ॥

अभिधाभावने[2]त्यत्र द्वेधा गतिः । अभिधा चासौ भावनेत्येकः पक्षः । अभिधाया भावनेत्यपरः । तत्राद्यपक्षे अभिधीयत इत्यभिधा प्रवर्तना, सैव पुरुषप्रवृत्तिं भावयतीति भावनेत्यर्थः ॥ २७ ॥

पक्षान्तरमाह—

यद्वेष्टसाधनत्वस्याभिधानमभिधोच्यते ।
सैव भावयतीत्येवं प्रवृत्तिमिह भावना ॥ २८ ॥

अभिधा नामेष्टसाधनत्वस्याभिधानम् । सैव पुरुषप्रवृत्तिं भावयतीति भावनेत्यर्थः ॥ २८ ॥

अभिधाया भावनेति द्वितीयं पक्षमाह—

यद्वाभिधत्त इत्येवमभिधाशब्द उच्यते ।
[3]तस्य प्रवृत्तौ कर्तुस्सा भावनाव्यापृतिर्मता ॥ २९ ॥

---

[1] चनायामपि—ङ. [2] त्यस्य—क. ख. [3] अस्य प्रवृत्तौ कर्तृत्वं—घ.

अभिदत्त इत्यभिधा शब्दः । तस्य पुरुषप्रवृत्तौ कर्तृत्वं प्रतिपद्यमानस्य व्यापारो भावना ॥ २९ ॥

एवं त्रिप्रकारमभिधाभावनाव्याख्यानम् । तथा च पक्षत्रयेऽपि व्यापार[1] एव शब्दभावनेत्यविरोध इत्याह—

**इत्थं त्रिष्वपि पक्षेषु व्यापारः शब्दभावना ।**

ततः [2]किमित्यत्राह—

**स्वव्यापारं ततः शब्दो नाभिधत्त इतीर्यते ॥ ३० ॥**

तत्राद्यपक्षे प्रवर्तना तावत्पुरुषसमवेता शब्दव्यापार इति न शक्यते वक्तुम् । अभिधानमेवाभिधेति द्वितीयपक्षे सैव भावनेति शक्यते वक्तुम् । अभिधानस्याभिधान्तराभावात् । अभिधा नाम शब्द इति तृतीयपक्षे शब्दव्यापारो भावना चेत्तस्याश्शब्देनाभिधानमनुपपन्नम्, स्वव्यापारस्य स्वेनैवाभिधातुमशक्यत्वात् । अर्थाभिधाने हि करणस्य शब्दस्य व्यापाराभावे "नाव्यापृतं करणं भवती" ति न्यायेन व्या[3]पारोऽवश्यमङ्गीकरणीयः । ततश्च व्यापारस्याभिधाने व्यापारान्तरापेक्षायामनवस्था स्यादिति भावः ॥ ३० ॥

प्रकारान्तरेणापि शब्दभावनायाः प्रवर्तकत्वमनुपपन्नमिति वक्तुमाह—

**किञ्च प्रवृत्तिजनिका ज्ञाता स्याच्छब्दभावना ।**
**उताज्ञाता,**

किमियं लिङाद्यभिधेया शब्दभावना ज्ञाता सती प्रवृत्तिं जनयेत् आहोस्विदज्ञाता ॥

द्वितीयपक्षे दोषमाह—

**न तावत्स्यादज्ञाताऽतिप्रसङ्गतः ॥ ३१ ॥**

अज्ञाताऽपि यदि प्रवृत्तिं जनयेत् सर्वत्र सर्वदा जनयेत् । अविशेषादिति भावः ॥ ३१ ॥

ज्ञाता प्रवृत्तिं जनयतीत्याद्यपक्षमपि द्वेधा विकल्पयति—

**यदि ज्ञाता तदा वाच्यं स्वतो ज्ञाताऽथ वाऽन्यतः ।**

ज्ञाता प्रवृत्तिं जनयेदित्यपि पक्षे सा किं स्वयमेव स्वतो ज्ञाता, अथान्यस्माज्ज्ञापकहेतोरिति विकल्पार्थः ॥

---

[1] रश्शब्द—क.　　[2] किमित्याह—क.　　[3] पारान्तरम—घ.

[1] पक्षद्वयेऽपि दोषमाह—

**आत्माश्रयत्वमाद्ये स्याद्द्वितीये त्वनवस्थितिः ॥ ३२ ॥**

स्वत एव स्वयं ज्ञायत इति पक्षे स्यादात्माश्रयत्वम्। तच्च स्वस्कन्धारोहणकल्पत्वादनुपपन्नम्। अन्यस्माज्ज्ञापकहेतोरिति पक्षे तस्याप्यन्यापेक्षायां हेत्वन्तरम्। एवं तस्य, तस्यापीत्येवमनवस्था मूलक्षयकरी स्यादिति भावः ॥ ३२ ॥

ननु शब्दभावनाया लिङाद्यभिधेयत्वे स्यादयं दोषः। लक्ष्यत्वे तु नायं दोष इति शङ्कते—

**अथ नैवोच्यते शब्दभावनाऽपि तु लक्ष्यते।**
**लिङेति,**

तर्हि वृत्तिद्वयप्रसक्तेरयुक्तमेतदिति परिहरति—

**अनुपपन्नं यल्लिङो वृत्तिद्वयं भवेत् ॥ ३३ ॥**

तदेव कथमित्याशङ्क्योपपादयति—

**तथा हि वृत्तिर्वाक्यार्थभावनायां लिङो मता।**
**वृत्तिर्लाक्षणकी शब्दभावनायां निगद्यते ॥ ३४ ॥**

अयमभिप्रायः—लिङादियुक्तवाक्येषु द्वे भावने अवगम्येते। शब्दभावना अर्थभावनाचेति। पूर्वाचार्याभिधानादुभयमपि शब्दगम्यमेवेति[2] मन्तव्यम्। तच्च नोभयमपि शब्दाभिधेयम्। उक्तदोषापत्तेः। "अन्यायश्चानेकार्थत्व"मिति न्यायस्य चानुपपन्नत्वात्। किन्तु शब्दभावना लक्ष्यते, अभिधीयते त्वर्थभावनेति वक्तव्यम्। तथा चैकस्यैव लिङ्पदस्य शब्दभावनायां लक्षणावृत्तिः, अर्थभावनायां मुख्यवृत्तिरित्येवं वृत्तिद्वयं स्यादिति ॥ ३४ ॥

न चैतद्युज्यत इत्याह—

**सकृदुच्चरितश्शब्दो न वृत्तिद्वयमर्हति।**

इति ॥

किंच शब्दभावनाया लिङादिलक्ष्यत्वे शब्दान्तरेण मुख्यत्वं वक्तव्यम्। रोधःकूलादिशब्देषु मुख्यस्यैव तीरादेर्गङ्गादिपदलक्ष्यत्वदर्शनादित्याह—

**यदि स्याल्लक्ष्यता शब्दभावनाया लिङादिना ॥ ३५ ॥**
**मुख्यताऽन्यत्र वक्तव्या मुख्यस्यैव हि लक्ष्यता।**

---

1 अर्धद्व—घ.  2 ति वक्तव्यम्—ङ.

लक्ष्यत्वे न्यायविरोधोपीत्याह—

**" न विधौ परः शब्दार्थ " इति न्यायान्न लक्षणा ॥ ३६ ॥**

पूर्वग्रन्थविरोधोऽपि लक्ष्यतायामित्याह—

**लक्ष्यता यदि पूर्वेषां ग्रन्थानां विप्लवस्तदा ।**
**लिङादयोऽपि कुर्वन्ति प्रेरणां प्रवदन्ति च ॥ ३७ ॥**
**लिङादियुक्तवाक्येषु भावनाद्वयमित्यपि ।**
**विरुध्येत ग्रन्थजातं,**

" लिङादयोऽपि कुर्वन्ति प्रेरणामभिदधति चे " ति लिङादियुक्तवाक्येषु द्वे भावने अवगम्येते । ' शब्दभावना अर्थभावना चेती ' त्यादि ग्रन्थेषु द्वयोरपि शब्दार्थत्वप्रदर्शनादित्यर्थः ॥

नन्वेतत्समस्तानुपपत्तिपरिहाराय द्वयोरप्यभिधेयत्वमेव वदाम इत्यत्राह—

**द्वयोर्नाप्यभिधेयता ॥ ३८ ॥**

कुत इत्याशङ्क्य विकल्पासहत्वादित्याह—

**[1] सकृत्क्रमाभिधानेन विकल्पे सत्ययुक्तितः ।**

किं द्वयोर्युगपदभिधानं क्रमेण वेति विकल्पार्थः ॥

तत्राद्यपक्षे दोषमाह—

**अनेकार्थत्वदोषः स्यादभिधाने सकृद्द्वयोः ॥ ३९ ॥**

' अन्यायश्चानेकार्थत्व "मिति न्यायादुभयोर्युगपदभिधानमयुक्तमिति भावः ॥

द्वितीये दोषमाह—

**क्रमेण चाभिधाने तु विरम्य व्यापृतिर्भवेत् ।**

शब्दबुद्धिकर्मणां विरम्य व्यापाराभावाद्द्वयोः क्रमेणाभिधानमयुक्तमिति भावः ॥

एवं शब्दभावनायां प्रवर्तकत्वं निराकृत्योपसंहरति—

**तन्न प्रवृत्तिजनिका युज्यते शब्दभावना ॥ ४० ॥**

अथाभिप्रायविज्ञानं प्रवर्तकमिति पक्षं दूषयितुमनुवदति—

**यच्चाभिप्रायविज्ञानं प्रवर्तकमितीरितम् ।**

---

1 सकृत्तथाऽभि—घ.

तद्दूषयति—

**तन्नाभिप्रायरूपिण्याः परबुद्धेरजानतः ॥ ४१ ॥**

अभिप्रायो नाम अध्यवसायः । न च तद्विज्ञानं युक्तं, परबुद्धेरप्रत्यक्षत्वादिति भावः ॥ ४१ ॥

ननु परबुद्धेरप्रत्यक्षत्वेऽपि परप्रयुक्तवाक्यादवगम्यत इति शङ्कते—

**अथ वाक्याद्विभातीति**

परिहरति—

**विकल्पे सत्ययुक्तितः ।**
**अभिप्रायः पदार्थो वा उत वाक्यार्थ इष्यते ॥ ४२ ॥**

परप्रयुक्तवाक्यात्पराभिप्रायोऽवगम्यमानः किं पदार्थत्वेनावगम्यते, उत वाक्यार्थत्वेनेति विकल्पार्थः ॥ ४२ ॥

पदार्थत्वेनेति वक्तुं न शक्यते । गवादिपदानां स्वार्था[1]भिधायकत्वेनाभिप्रायाभिधायकत्वाभावादित्याद्यं दूषयति—

**न तावच्छक्यते वक्तुं पदार्थ इति यत्पदैः ।**
**गवादिरूपस्यार्थस्याभिधानं न धियो मतम् ॥ ४३ ॥**

द्वितीयं दूषयति—

**न च वाक्यर्थता युक्ताऽभिप्रायस्य द्वयी हि सा ।**
**पदार्थानामन्वयो वा पदार्था वाऽन्वितास्तथा ॥ ४४ ॥**
**वाक्यार्थ इत्यभिमतमभिप्रायस्तु नोभयम् ।**

अभिप्रायो [2]वाक्यार्थत्वेनावगम्यत [3]इत्युक्तम् । अन्विताः पदार्थाः, पदार्थानामन्वयो वा वाक्यार्थ इत्यङ्गीकारादभिप्रायस्य चोभयोरन्यतरत्वाभावेन वाक्यादवगतेरयुक्तत्वादिति भावः ॥

ननु विमतवाक्यं विशिष्टाभिप्रायवद्भवितुमर्हति, वाक्यत्वात्, सम्मतवाक्यवदित्यनुमानेनाभिप्रायविज्ञानं [4]भविष्यतीति शङ्कते—

**अभिप्रायानुमानं चेद्वाक्यत्वादिति हेतुना ॥ ४५ ॥**

---

[1] भिधायकत्वेनाभिप्राया[न]भिधायकत्वात्—घ. [2] क्यादव—क. ख. [3] इत्युक्तम्—ङ.
[4] फलिष्यतीति—क. ख.

विकल्पासहत्वेन परिहरति—

**न तद्युक्तं विशेषोऽत्र सामान्यं वाऽनुमीयते ।**

अभिप्रायविशेषोऽनुमीयते सामान्यं वेति विकल्पार्थः ॥

अद्यं दूषयति—

**नाद्यो व्याप्तिग्रहाभावात्**

विशेषविषयव्याप्तौ दृष्टान्ताभावादित्यर्थः ॥

द्वितीये दोषमाह—

**द्वितीये तु व्यवस्थिता ॥ ४६ ॥**

**प्रवृत्तिर्नोपलभ्येत**

अभिप्रायसामान्यानुमानेन प्रवर्तमानो गामानयेति वाक्यादश्वानयनेऽपि प्रवर्तेतेति भावः ॥

एवमभिप्रायस्य प्रवर्तकत्वं निरस्य निगमयति—

**ततोऽयं न प्रवर्तकः ।**

पराभिप्रायस्य मध्यमवृद्धेन ज्ञातुमशक्यत्वा[1]दभिप्रायः प्रवर्तक इति पक्षो न युक्त इति भावः ॥

इच्छायाः प्रवर्तकत्वपक्षं दूषयितुमनुवदति—

**अभ्यदायि च येच्छायाः प्रवृत्तिं प्रति हेतुता ॥ ४७ ॥**

दूषयति—

**न साऽपि युज्यते यस्मान्न मीमांसासहिष्णुता ।**

ननु ज्ञानेच्छाप्रयत्नानां क्रमभावित्वेन दृष्टत्वात्कथमिच्छातः प्रवृत्तिर्न युक्तेत्यत्राह —

**प्रवृत्तिर्यद्यपीच्छातः पुरुषस्य हि दृश्यते ॥ ४८ ॥**
**अपि सा सत्तया तस्या ज्ञायमानतया न तु ।**
**प्रवर्तकं ज्ञायमानतयाऽत्र तु विचार्यते ॥ ४९ ॥**

सत्यम्, [2]इच्छानन्तरं प्रवृत्तिः प्रकाशते, सा त्विच्छायाः सत्तामात्रेणैव भवति, न तु वाक्यार्थतया ज्ञायमानत्वेन। इह तु शास्त्रे वाक्यार्थतया ज्ञायमानमेव प्रवर्तकतया विचार्यते, अतो नेच्छा प्रवर्तिकेति भावः ॥ ४९ ॥

---

[1] त्वादिति भावः—क. ख.    [2] ज्ञानानन्तरं—ङ.

किं तर्हि ज्ञायमानतया प्रवर्तकं तत्राह —

**तच्चोक्तरीत्या कार्यं स्यान्नान्यद्युक्तिविरोधतः ।**

वृद्धव्यवहारानुगुणं प्रवृत्तिजनकं कार्यमेव निर्णीतम् । अन्यस्त्वानुगुण्याभावान्न प्रवर्तकमित्यर्थः [1] ॥

ननु लोके वृद्धव्यवहारबलात्कार्यमेव प्रवर्तकमस्तु, वेदे त्वन्यदेव किं न स्यादित्यत्राह—

**अन्वयव्यतिरेकाभ्यां यतो लोके प्रवर्तकम् ॥ ५० ॥**
**[2]कार्यमेव ततो वेदे तदेवेष्टं प्रवर्तकम् ।**

अयं भावः—य एव लौकिकाः शब्दास्त एव वैदिकास्त एव च तेषामर्था इति लोकवेदाधिकरणे (पू. मी. अ. १ पा. ३ अधि. ९) निर्णीतम् । तथा सत्यन्वयव्यतिरेकबलाद्वृद्धव्यवहारानुगुण्येन लोके कार्यस्यैव प्रवर्तकतया निश्चितत्वाद्वेदेऽपि तदेव प्रवर्तकतयाऽङ्गीकर्तव्यमिति ॥

नन्वेवं कार्याभिधायिपदस्य कार्यपरत्वेऽपि पदान्तराणामन्यार्थतया नैकरूपता स्यात्तत्राह—

**तस्मात्कार्यान्वितं सर्वं पदानां वदतामपि ॥ ५१ ॥**
**स्यात्कार्यपरता साक्षाल्लिङादेस्त्वभिधानतः ।**

सत्यम्, लिङादिपदस्याभिधायकत्वेनैव कार्यपरत्वम् । [3]इतरपदानामपि कार्यान्वितस्वार्थाभिधायकत्वेनैव कार्यपरत्वं सेत्स्यति । कार्यान्वयं विना स्वतन्त्रार्थाभिधाने सामर्थ्याभावात् । अन्वि[4]ताभिधानस्य सम्प्रदा[5]यतः सप्रमाद्यसिद्धत्वाद्वाक्यार्थमातृकायामुपोद्घातपरिच्छेदे शालिकानाथेन निपुणतरमुपपादितत्वान्नेह प्रपञ्च्यत इति भावः ॥

उक्तप्रकारेण कार्यस्य लोके प्रवर्तकतया अनुभवसिद्धत्वाद्वेदेऽपि तदेवाङ्गीकर[6]णीयम् । तथा सति लोकवेदाधिकरणन्यायः स्यादित्याह—

**तदेव कार्यमेवैकरूपत्वाल्लोकवेदयोः ॥ ५२ ॥**
**प्रवर्तकतया ज्ञेयं विशेषस्त्वनयोरियान् ।**

न च लोके वृद्धव्यवहारानुगुण्येन प्रवर्तकत्वं कार्यस्यास्तु । वेदे त्वपौरुषेये वृद्धव्यवहाराभावात्कथं तत्र कार्यार्थनिश्चय इति वाच्यमित्याह—

**लोके क्रियात्मकं कार्यं स्याद्वृद्धव्यवहारतः ॥ ५३ ॥**

---

[1] मिति भावः—घ. [2] अयं श्लोकः ख.—पुस्तके नोपलभ्यते. [3] इतरस्यापि—ङ.
[4] तानभि—घ. [5] दानतः—घ. [6] णीयमिति—घ.

**तदेव वैदिकं कार्यं किं वाऽन्यदिति संशये ।**
**समभिव्याहृताच्छब्दादन्यदेवेति निश्चयः ॥ ५४ ॥**

[1] कार्यस्य प्रवर्तकत्वं तावदुभयत्र लोकवेदाधिकरणसिद्धम् । तच्च कार्यं वृद्धव्यवहारबलात्क्रियात्मकमपि सिद्धम् । वेदे तु वृद्धव्यवहाराभावात्क्रियात्मकं वा स्यात्, अन्यद्वेति संशयो भवति । स च संशयः पदान्तरसमभिव्याहारबलात्क्रियातिरिक्त कार्यार्थत्वनिर्णयेन निराक्रियत इति भावः ॥ ५३–५४ ॥

नन्वत्र किं वा पदान्तरं समभिव्याहृतम् । कथं वा तद्वशात्क्रियातिरिक्तकार्यार्थत्वनिश्चय इत्यत्राह—

**स्वर्गकामपदं तत्र समभिव्याहृतं लिङा ।**
**नियोज्यमभिधत्ते तदिति षष्ठाद्यनिश्चितम् ॥ ५५ ॥**
**साध्यस्वर्गविशिष्टोऽसौ स्वकाम्यस्यापि साधनम् ।**
**अवगच्छति कार्यं,**

"स्वर्गकामो यजेत"त्यत्र लिङ्पदसमभिव्याहृतं स्वर्गकामपदं नियोज्याभिधायकमिति षष्ठाद्ये स्वर्गकामाधिकरणे निरूपितम् । अत्र कामशब्दबलात्स्वर्गस्य साध्यत्वं प्रतीयते । स च स्वर्गः साध्यत्वेनैव [2]नियोज्यविशेषणं भवति । तथा च साध्यस्वर्गविशिष्टो नियोज्यः स्वकाम्यमानस्वर्गसाध[3]नमपि कार्यत्वेनावबुध्यत इत्यर्थः ॥

ननु स्वकाम्यमानस्वर्गसाधनतया क्रियामेव [4]कार्यमवबुध्यताम् । तथा च लोकवेदयोरैकरूप्यमेव स्यात्तत्राह—

**तत्काम्यं न प्राप्यतेऽधुना ॥ ५६ ॥**
**अन्यदेशेऽन्यकाले च देहेनान्येन भुज्यते ।**
**ततः कार्यतयाऽवैति न क्रियां क्षणभङ्गिनीम् ॥ ५७ ॥**
**तद्वेदे स्थायिना भाव्यं कार्येणाऽऽलोचने सति ।**

सत्यम्, क्रियामेव कार्यतयाऽवगच्छेत्, यदि तत्फलमधुना प्राप्येत । तत्तु देशान्तरे कालान्तरे देहान्तरे भोग्यम् । क्रिया च क्षणिकतया प्रत्यक्षसिद्धा । अतस्तां कार्यत्वेन नावगच्छति । किन्तु कालान्तरभाविफलं पर्यालोच्य तादृक्फलप्रापकं स्थाय्येव किञ्चित्कार्यत्वेनावबुध्यत इत्यर्थः ॥ ५६–५७॥

---

[1] कार्यप्रवर्तकं—ङ. [2] योगवि—क. [3] नमेव—ङ. [4] कार्यत्वेनाव—घ.

ननु पदान्तरसमभिव्याहारबलात्पदार्थनिर्णयः कुत्र सिद्ध इत्यत्राह—

**समभिव्याहृतः शब्दो ह्यस्य शब्दार्थबोधने ॥ ५८ ॥**
**हेतुर्यववराहाधिकरणे वाक्यशेषतः ।**
**वराहवेतसयवशब्दानामर्थनिश्चयात् ॥ ५९ ॥**

पदान्तरसमभिव्याहारबलात्पदार्थनिर्णयः प्रथमाध्यायतृतीयपादे यववराहाधिकरणे (अधि. ४.) प्रसिद्धः । तथा हि—"यवमयश्चरुर्भवति" "वाराही उपानहावुपमुञ्चते" "[1]वैतसे कटेऽग्निं चिनोति" इत्यत्र किमेषामप्रामाण्यमुत प्रामाण्यमिति चिन्तायां यववराहवेतसशब्दानां प्रियङ्गु[2]वायसजम्बूवाचकत्वमनार्या व्यवहरन्ति । आर्यास्तु दीर्घशूकसूकरवानीराभिधायकत्वम् । तथा चाऽऽर्यानार्यव्यवहारविप्रतिपत्त्या यवादिपदार्थानध्यवसायादप्रामाण्यमनध्यवसितार्थपदवद्वेदवाक्यानामिति प्राप्ते—

राद्धान्तः—यद्यपि विरुद्धं व्यवहारद्वयम् । तथाऽपि वाक्यशेषानुगुण्यमार्यव्यवहारस्यास्ति । न त्वनार्यव्यवहारस्य । इतरौषधिम्लानदशायामनार्यव्यवहारसिद्धयवशब्दवाच्यप्रियङ्गूनां मोदमानत्वाभावात् । गवां च वत्सबुद्ध्या वायसानुधावनस्यायुक्तत्वात् । जम्ब्वाश्चाप्सु जन्माभावात् । तस्माद्वाक्यशेषबलाद्यववराहवेतसशब्दानां दीर्घशूकसूकरवानीरा एवार्थाः, न प्रियङ्गुवायसजम्ब्व इति पदार्थाध्यवसानस्य विद्यमानत्वादध्यवसितार्थपदवद्वेदवाक्यानां प्रामाण्यमिति स्थापितत्वादिति भावः ॥ ॥ ५८—५९ ॥

न केवलं यववराहाधिकरण एव समभिव्याहारबलात्पदार्थाध्यवसानं, स्थला[3]न्तरेऽप्यस्तीत्याह—

**अक्ता उपदधातीति चाञ्जनद्रव्यसंशये ।**
**वाक्यशेषेण 'तेजो वै घृतमि'त्यर्थनिश्चयात् ॥ ६० ॥**

तत्रैवाध्याये चतुर्थपादे [एकोनविंशाधिकरणे] "[4]अक्ताः शर्करा उपदधाती"त्यत्र अप्रामाण्यं प्रामाण्यं वेति चिन्ता । यद्यप्यक्तशब्दस्याञ्जनद्रव्ययुक्तमर्थो भवति । तत्त्वञ्जनद्रव्यं घृततैलवसादीनामन्य[5]तमं भवति । तन्निर्णयाभावे चानुष्ठानं न सिद्ध्यतीत्यननुष्ठानलक्षणमप्रामाण्यमिति प्राप्ते—

राद्धान्तः—यद्यपि घृततैलादीनामन्यतमेनाञ्जनं संभवति । तत्तु 'तेजो वै घृतमि'ति वाक्यशेषाद्घृतमेवेति निर्णयान्नाननुष्ठानलक्षणमप्रामाण्यमिति

---

[1] वैतसे कटे प्राजापत्यान् सञ्चिनोति (इति शाबरभाष्ये)—ग. [2] कृष्णशकुनि—**घ.**
[3] न्तरेऽपीत्याह—**ङ.** [4] अक्ता उपदधाति—**ङ.** [5] तमवद्भवति—**ङ.**

"[1]सन्दिग्धेषु वाक्यशेषात्" (पू. मी. अ. १, पा. ४, सू. २६) इत्यत्र स्थापितमिति भावः ॥ ६० ॥

तथा चात्र नियोज्याभिधायकस्वर्गकामपदसमभिव्याहारबलाल्लिङादीनां स्थायिरूपकार्यार्थत्वं निश्चीयत इत्याह—

**स्वर्गकामपदेनात्र समभिव्याहृतेन च ।**
**लिङादीनां स्थायिरूपकार्यार्थत्वविनिश्चयः ॥ ६१ ॥**

न च वाच्यं यववराहस्थले वाक्यशेषः पदार्थनिर्णयहेतुः, अत्र तु वाक्यस्थमेव पदं पदार्थान्तरनिर्णयहेतुरिति वैषम्यमिति । एकवाक्यत्वाभावे तत्रापि निर्णयहेतुत्वानुपपत्तेः । न च तत्र पदसमुदायो निर्णयहेतुः, अत्र त्वेकं पदमिति वाच्यम् । अप्रयोजकवैषम्यमात्रत्वात् । लोके च 'इह प्रभिन्नकमलोदरे मधूनि मधुकरः पिबती' त्यत्र प्रसिद्धार्थपदसमभिव्याहारबलान्मधुकरशब्दस्यैकवाक्यगतस्यैवार्थनिश्चयात् । न च सिद्धे व्युत्पत्तिप्रसङ्गः । निराकरिष्यमाणत्वादिति भावः ॥ ६१ ॥

ननु गुरुमते लिङादीनामपूर्वार्थत्वमेव वदन्ति, न तु स्थायिकार्यार्थत्वम् । अतः कथमुच्यत इत्यत्राह—

**तच्च कार्यं प्रमाणानामन्येषामप्यगोचरम् ।**
**लभतेऽपूर्वमित्याख्यामित्युक्तं शालिकाकृता ॥ ६२ ॥**

स्थायिकार्यमेव प्रमाणान्तरागोचरं सदपूर्वमित्युच्यते, न तु तद्व्यतिरिक्तं किंचिदिति शालिकानाथेनोक्तमित्यर्थः ॥ ६२ ॥

तामेव शालिकामाह—

**क्रिया[दि]विभिन्नं यत्कार्यं वेद्यं मानान्तरैर्न तत् ।**
**अतो मानान्तरापूर्वमपूर्वमभिधीयते ॥ ६३ ॥**

क्रियाव्यतिरिक्तं यत्स्थायिकार्यमस्ति तद्भेदव्यतिरिक्तैः प्रमाणैर्नावेद्यते । अत एव प्रमाणान्तरैः पूर्वमनधिगतत्वादपूर्वमित्यभिधीयत इति शालिकार्थः ॥ ६३ ॥

ननु नियोगार्थत्वमपि क्वचिदुक्तं कथमित्याशङ्क्य तदेव स्थायिरूपमपूर्वाख्यमवस्थाभेदेन नियोगसंज्ञां प्राप्नोतीति शालिकानाथेनैवोक्तमित्याह—

**अवस्थान्तरमापन्नमपूर्वाख्यं तदेव [2]हि ।**
**नियोगाख्यां लभेतेति तेनैवोक्ता हि शालिका ॥ ६४ ॥**

---

[1] सन्दिग्धे तु —घ. [2] वा—ङ.

शालिकामेवाह—

कार्यत्वेन नियोज्यं च स्वात्मनि प्रेरयन्नसौ ।
नियोग इति मीमांसानिष्णातैरभिधीयते ॥ ६५ ॥

यदपूर्वं स्वात्मनि पुरुषस्य 'ममेदं कार्यमि' ति बोधं जनयन् पुरुषं नियुङ्क्तेऽसौ नियोग इति मीमांसानिपुणैरभिधीयत इत्यर्थः ॥ ६५ ॥

अथ कोऽसौ [1]नियोज्य इत्याशङ्क्य तल्लक्षणमपि शालिकानाथेनैवोक्तमित्याह—

[2]तेनैव हि नियोज्यस्य लक्षणं च समीरितम् ।

किं तदित्याशङ्क्य तदुक्तमेवाह—

नियोज्यस्स तु कार्यं यस्स्वकीयत्वेन बुध्यते ॥ ६६ ॥

'यस्तु ममेदं कार्यमि 'ति बुध्यते स नियोज्य इत्यर्थः ॥ ६६ ॥

एवं स्वर्गकामपदसमभिव्याहारबलेन स्थायिरूपकार्यमपूर्वाख्यं लिङर्थ इति प्रतिपादितमर्थमुपसंहरति—

तत्का[म]सिशब्दसमभिव्याहारात्स्थायिरूपिणः ।
अपूर्वाख्यस्य कार्यस्य लिङादिपदवाच्यता ॥ ६७ ॥

नन्वेवं लोके क्रियात्मकं कार्यं, वेदे त्वपूर्वमिति लोकवेदयोरेकरूपता कथं? तत्राह—

स्थायिरूपमपूर्वं यद्वेदवेद्यं तदेव नः ।
कार्यं मानान्तरेणापि वेद्यमित्याह शालिका ॥ ६८ ॥

तामेवोदाहरति—

कृतिसाध्यं प्रधानं यत्तत्कार्यमभिधीयते ।
तच्च मानान्तरेणापि वेद्यमोदनपाकवत् ॥ ६९ ॥

यत्तावत्प्रधानतया कृत्या साध्यते तत्कार्यमित्युच्यते । तच्च प्रमाणान्तरेणापि वेद्यते । ओदनं पचेत्युक्ते पाकस्य प्रधानतया कृतिसाध्यत्वेन प्रतीयमानत्वादिति शालिकार्थः ॥ ६९ ॥

---

1 नियोग —ङ. 2 तेनैवाऽस्ति—घ.

एवं महता प्रपञ्चेन प्रतिपादितं कार्यमेव प्रवर्तकमिति [1]पक्षं निगमयति—

**ततः प्रवर्तकं कार्यमेष्टव्यं लोकवेदयोः ।**
**ऐकरूप्यादताद्रूप्यान्नेतरत्तु प्रवर्तकम् ॥ ७० ॥**

उक्तकार्यमेव लोकवेदयोरेकरूपत्वात्प्रवर्तकतयाऽङ्गीकर्तव्यम् । इष्टसाधनत्वादिकं त्वेकरूपत्वाभावान्न प्रवर्तकमिति भावः ॥ ७० ॥

॥ इत्यहो[2]बलदेवविरचितायां वाक्यार्थरत्नतात्पर्यप्रकाशिकायां सुवर्णमुद्रिकायां उपोद्घातो नाम प्रथमः परिच्छेदः ॥

---

[1] इदं पक्षमिति पदं क. ख.—पुस्तकयोर्न दृश्यते. [2] बलार्य—क. ख.

# द्वितीयः परिच्छेदः

एवं तावदपूर्वाख्यं स्थायिकार्यं लिङाद्यर्थ इति प्रतिपादितम् । तत्र च त्रितयी विप्रतिपत्तिः । स्वर्गकामपदसमभिव्याहारोपपत्तिसिद्ध्यर्थं क्रियायाः स्थायित्वं परिकल्प्यताम्, किमपूर्वेणेत्येका । यागस्य स्वर्गं प्रति श्रुतसाधनभावस्य निर्वाहायापूर्वं कल्प्यताम्, न तु तस्य लिङाद्यभिधेयतेत्यपरा । स्वर्गकामपदस्य कर्तृपरत्वेन नियोज्यपरत्वाभावान्न तत्समभिव्याहारबलायातमपूर्वस्य लिङाद्यभिधेयत्वमित्यन्या । एवं विप्रतिपत्तित्रयमपि वर्तिष्यमाणपरिच्छेदत्रितयेन निराकरिष्यमाण इदानीमपूर्वाख्यस्य स्थायिकार्यस्य लिङाद्यभिधेयतामनङ्गीकुर्वाणस्य क्रियायाः स्थायित्ववादिनो मतमुपस्थापयति—

**अत्र प्रत्यवतिष्ठन्त एकेऽपूर्वान्वयं प्रति ।**

एके क्रियायाः स्थायित्ववादिन इत्यर्थः ॥

प्रत्यवस्थानप्रकारमेव दर्शयति—

**प्रवर्तकं कार्यमस्तु[1] तत्त्वपूर्वं न मृष्यते ॥ १ ॥**

कार्यं तावत्प्रवर्तकमस्तु । तत्तु कार्यमपूर्वमित्येतन्न [2] मृष्याम इत्यर्थः ॥ १ ॥

ननु पूर्वमेव सोपपत्तिकमुपपादितत्वात्कथं नाङ्गीक्रियत इत्यत्राह—

**कामशब्दबलादेव ह्यपूर्वस्य लिङर्थता ।**
**स्थायिरूपस्य कार्यस्य भवताऽप्यभिधीयते ॥ २ ॥**
**कामशब्दस्य समभिव्याहारो युज्यतेऽन्यथा ।**

स्वर्गकाम[पद]समभिव्याहारबलाद्धि स्थायिरूपमपूर्वाख्यं कार्यं लिङाद्यभिधेयमिति गुरुमतम् । [3]कामपदसमभिव्याहारस्त्वन्यथाऽप्युपपद्यत इत्यर्थः ॥ २ ॥

नन्वपूर्वस्य लिङाद्यभिधेयतामन्तरेण कथं कामपदसमभिव्याहारस्यान्य[4]थाप्युपपत्तिरित्यत्राह—

**उपपत्तेर्नियोज्यस्य क्रियास्थायित्वकल्पने ॥ ३ ॥**

साध्यस्वर्गविशिष्टो नियोज्यः स्वकाम्यमानसाधनं कार्यत्वेनावगच्छति । तस्य च काम्यस्य कालान्तरभावित्वेन क्रियां क्षणभङ्गिनीं न कार्यत्वेनावगन्तुमर्हतीति समीरितम् ।

---

[1] नत्वपूर्वं तदिष्यते—घ. [2] मृष्यामह इत्यर्थः—क. ख. [3] कमिशब्द—ग. [4] थानुपपत्तिरित्यत्राह—ङ.

तस्या एव क्रियायाः स्थायित्वं परिकल्प्यताम् । तथा च स्थायिनीं क्रियामेव कालान्तरभाविस्वर्गसाधनतया कार्यत्वेनावगच्छत्वित्यर्थः ॥ ३ ॥

ननु स्यादेवं यदि क्रियायाः स्थायित्वं प्रामाणिकं स्यात्, तत्तु विरुद्धम् । क्षणिकतया प्रत्यक्षत्वोपगमादित्यत्राह—

**न चाध्यक्षविरोधोऽपि क्रियास्थायित्वकल्पने ।**

अत्र हेतुमाह—

**फलनाश्यतया लोके क्रिया यदवगम्यते ॥ ४ ॥**

उत्तरसंयोगान्तत्वेन क्रियायाः प्रत्यक्षसिद्धत्वादिति भावः ॥ ४ ॥

नन्वेवमपि क्रियायाः कालान्तरभाविफलपर्यन्तावस्थानमनुपपन्नम्, त्रिक्षणावस्थायित्वस्य दृष्टत्वादिति चोदयति—

**ननु क्रिया फलेनापि समनन्तरभाविना ।**
**विनष्टा लोकतो दृष्टा न कालान्तरभाविना ॥ ५ ॥**
**इति चेत्,**

समाधत्ते—

**उच्यते यादृक्फलसाधनभावतः ।**
**क्रियाऽवगम्यते तादृक्फलेनासौ विनश्यति ॥ ६ ॥**

न च क्रियायाः क्षणिकत्वं स्थायित्वं वा [1] स्वभावः । किंतु स्वोत्पाद्यफलविनाश्यत्वम् । तथा च यत्र समनन्तरभाविफलसाधकत्वं दृष्टं तत्र तेनैव [2] फलेन विनाश्यतया क्षणिकत्वम्, [3] यत्र तु कालान्तरभावि[4]साधकत्वं तत्र तज्जातेनैव फलेन विनाश्यत्वम्, स्वोत्पाद्यफल[5]विनाश्यत्वरूपक्षणिकत्वस्वाभाव्यात्क्रियाया इति भावः ॥ ६ ॥

लाघवादपि स्थायित्वमेव कल्प्यतामित्याह—

**किं च युक्ताऽपि धर्मस्य कल्पना धर्मिकल्पनात् ।**
**नियोज्यार्थमतो युक्तं क्रियास्थायित्वकल्पनम् ॥ ७ ॥**

क्रियायाः स्थायित्वं धर्ममात्रमेव कल्प्यम् । लाघवात् । अपूर्वाख्ये धर्मिणि कल्प्यमाने तस्य स्थायित्व[मपी]मिति गौरवमिति भावः ॥ ७ ॥

---

[1] स्वभावतः—ङ. [2] विनाशतया—ङ. [3] अत्र—ङ. [4] साधकत्वेन तत्पातेनैव फलेन—ङ. [5] विनाश्यत्वस्वाभाव्यत्—घ.

नन्वपूर्वस्य कल्प्यत्वे गौरवं भवेदेव, अस्माभिरपूर्वस्य लिङाद्यभिधेयत्वाभिधाने तु कल्प्यत्वाभावान्नाऽयं दोष इत्याशङ्क्य व्यवहारविरुद्धं स्थायिकार्यस्य लिङाद्यभिधेयत्वमित्याह—

किं च व्युत्पत्तिसापेक्षाश्शब्दास्सर्वेऽर्थबोधकाः ।
कथं तामनपेक्ष्यैव वदन्त्यर्थं लिङादयः ॥ ८ ॥

शब्दार्थ[1]प्रतिपत्तेः सङ्केतग्रहणपूर्वकत्वाल्लिङादीनां चापूर्वे सङ्केताभावात्तदनपेक्षया लिङादीनामपूर्वाभिधायकत्वं लोकव्यवहारविरुद्धमिति भावः ॥ ८ ॥

ननु न वयमपि स्थायिकार्ये लिङादीनां व्युत्पत्त्यनपेक्षतां ब्रूमः । अपि तु व्युत्पत्तिमपेक्ष्यैव लिङादयः स्थायिकार्यमभिदधतीति शङ्कामनुवदति—

[2]व्युत्पत्तिं यद्यपेक्ष्यैव वदन्तीत्युच्यते तदा ।

तदेतद्विकल्पयति—

किं लोकतो लिङोऽपूर्वे व्युत्पत्तिर्वेदतोऽथवा ॥ ९ ॥

किं प्रत्यक्षादिप्रमाणादिनाऽपूर्वकार्ये व्युत्पत्तिः, किं वा [3]वेदाधीनेति विकल्पार्थः ॥ ९ ॥

आद्यमनूद्य दूषयति—

यदि लोकात्क्रियारूपं कार्यं तर्हि [4]प्रसज्यते ।
तस्य लोके प्रतीतत्वादितरस्याप्रतीतितः ॥ १० ॥

स्थायिकार्ये लिङादेर्व्युत्पत्तेः प्रत्यक्षादिप्रमाणाधीनत्वे क्रियाकार्यस्यैव प्रतिपन्नत्वाद्वेदेऽपि तदेव कार्यं लिङाद्यभिधेयतया प्रसज्येतेति भावः ॥ १० ॥

प्रत्यक्षादिप्रमाणाधीनव्युत्पत्तिकत्वे लिङाद्यभिधेयस्य मानान्तरामेयत्वरूपमपूर्वत्वं च व्याहतं स्यादित्याह—

भज्येतापूर्वता तर्हि व्युत्पत्तिर्यदि लोकतः ।
मानान्तराप्रमेयत्वादपूर्वत्वं हि सम्मतम् ॥ ११ ॥

वेदाधीना लिङादीनामपूर्वे व्युत्पत्तिरिति द्वितीयपक्षे दोषमाह—

प्रसज्येत द्वितीयेऽपि कल्प आत्माश्रयो यतः ।
व्युत्पत्त्यर्थमसौ लिङ् स्यादभिधानार्थमित्यपि ॥ १२ ॥

---

[1] प्रवृत्तेः—क. ख. [2] यदि व्युत्पत्तिसापेक्षा— ख. ग. [3] वेदादिनेति—घ.
[4] प्रवर्तते—ङ.

[1] वेदाधीनेत्यत्रापि [2] लिङाद्यधीनेत्येव वक्तव्यम् । तथा च व्युत्पत्त्यर्थमभिधानार्थं चैक एव लिङित्यात्माश्रयत्वमित्यर्थः ॥ १२ ॥

ननु तार्किकेतेऽपूर्वे लिङादीनां व्युत्पत्तिं ब्रूमः । तथा च नापूर्वत्वभङ्गो ना[त्मा]त्माश्रयत्वमित्याशङ्कते—

अथ तर्कपरामृष्टं स्थाय्यपूर्वं लिङादयः ।
बोधयन्तीत्यपि

तदेतद्विकल्पयति—

तदा ज्ञानद्वैराश्यवादिनाम् ॥ १३ ॥
प्रमाणं किमयं तर्कः स्मृतिर्वा स्यात्,

प्रमाणं स्मृतिश्चेति द्विप्रकारकमेव ज्ञानं गुरुमते। तथा च तर्कात्मकं परामर्शज्ञानं किं प्रमाणं, किं वा स्मृतिरिति विकल्पार्थः ॥ १३ ॥

आद्यं दूषयति—

न चाग्रिमः ।
भज्येताऽपूर्वता यस्मात्,

प्रमाणाधीनव्युत्पत्तिकत्वेऽपूर्वत्वमेव व्याहन्येतेत्यर्थः ॥

उक्तदोषापत्त्यैव द्वितीयं दूषयति—

अत एव न चेतरः ॥ १४ ॥

ननु स्मृतिपक्षे कथमपूर्वार्थत्वव्याहतिरित्यत्राह—

अनुभूतिसमुद्भूतसंस्कारात्स्मृतिजन्म नः ।
अत्राप्यनुभवोत्थत्वे तज्ज्ञेयाऽपूर्वता हता ॥ १५ ॥

अनुभवसमुत्थसंस्कारमन्तरेण स्मृतिरेव नोदेतीति [3] स्मृत्यर्थमनुभवेन भाव्यम् । तथाचानुभवजन्यस्मृतिगोचरत्वेऽपूर्वत्वव्याहतिरेवेति भावः ॥ १५ ॥

ननु न वयमनुभवोत्थां स्मृतिं ब्रूमः । अपि तु सापेक्षं ज्ञानमित्येव । अस्ति च तर्कस्यापि प्रमाणाङ्गत्वेन प्रमित्यपेक्षेति स्मृतिरित्याशङ्कते—

अथ सापेक्षतामात्रात्स्मृतिता यदि चेष्यते ।

---

[1] वेदादिनेत्यत्रापिं—घ. [2] लिङादीत्येव—घ. [3] स्मृतिजनकानुभवेन—ङ.

तर्हि शालिकानाथोक्तस्मृतिलक्षणविरोधो भवेदिति दूषयति—

**प्रमाणमनुभूतिस्सा स्मृतेरन्या स्मृतिः पुनः ॥ १६ ॥**
**पूर्वविज्ञानसंस्कारमात्रजं ज्ञानमुच्यते ।**
**इति वृद्धैरभिहितं तर्हि भज्येत लक्षणम् ॥ १७ ॥**

पूर्वानुभवजन्यसंस्कारमात्रजन्यं ज्ञानं स्मृतिरिति स्मृतिलक्षणम् । प्रत्यभिज्ञायाः [1] संस्कारेन्द्रियसंप्रयोगजन्यत्वात्तन्निवृत्त्यर्थं मात्रग्रहणम् । तेन सापेक्षं ज्ञानं स्मृतिरिति न लक्षणमित्यर्थः ॥ १६—१७ ॥

स्मृतेः सापेक्षज्ञानतामङ्गीकृत्याऽपि दूषणान्तरं वक्तुं विकल्पयति—

**किं च सापेक्षतोत्पत्तौ ज्ञप्तौ वेति निरूप्यताम् ।**

उत्पत्तौ सापेक्षत्वमित्यत्रापि किं ज्ञानमात्रापेक्षत्वम् ? वस्तुमात्रापेक्षत्वं वा ? नाद्यः । अनुमानादेर्व्याप्तिज्ञानसापेक्षत्वेन [2] स्मृतित्वप्रसङ्गात् । न द्वितीयः । प्रत्यक्षादेरपि स्वोत्पत्ताविन्द्रियार्थसन्निकर्षसापेक्षत्वेन स्मृतित्वमापद्येतेत्यर्थः ॥

ज्ञप्तौ सापेक्षत्वमित्यत्रापि किं वस्त्वन्तरापेक्षत्वम् ? उत ज्ञानान्तरसापेक्षत्वम् ? नाद्यः । प्रत्यक्षादेरपि स्वज्ञप्तौ प्रमात्रादिसापेक्षत्वेन स्मृतित्वापत्तेरित्यभिप्रेत्य द्वितीये दोषमाह—

**अथ ज्ञप्तौ तदा ज्ञप्तेर्हीयेत स्वप्रकाशता ॥ १८ ॥**

तर्कात्मकस्य परामर्शज्ञानस्य स्वज्ञप्तौ ज्ञानान्तरसापेक्षत्वे ज्ञानस्य गुरुनयसिद्धं स्वप्रकाशत्वं न स्यादित्यर्थः ॥ १८ ॥

उक्तप्रकारेण दुष्टत्वाच्छालिकोक्तलक्षणानुगुण्याभावाच्च सापेक्षत्वं स्मृतिलक्षणं न युक्तमित्याह—

**ततः सापेक्षतामात्रात्स्मृतित्वं तु न शक्यते ।**
**शालिकालक्षणस्यानुरोधाभावाच्च नेष्यते ॥ १९ ॥**

एवमुक्तरीत्या व्युत्पत्तिराहित्यादपि स्थाय्यपूर्वं न लिङाद्यभिधेयमित्याह—

**अतो लिङादयः स्थायिकार्ये व्युत्पत्तिवर्जिताः ।**
**[3] तन्नाभिदधतीत्येव नापूर्वस्य [4] लिङर्थता ॥ २० ॥**

तेन क्रियायाः स्थायित्वमेव कल्पनीयमिति भावः ॥ २० ॥

---

[1] संस्कारसंप्रयोग—ङ. [2] स्मृतित्वमापद्येतेत्यर्थः—घ. [3] तस्मादभिदधत्येवं—क.
[4] लिङर्थताम्—क.

क्रियाकार्यस्यैव वेदेऽपि प्रवर्तकतया वाक्यार्थत्वाङ्गीकारे लाघवमप्यस्तीत्याह—

**किं च क्रियात्मकं कार्यं वेदे चेदिष्यते तदा ।**
**एकरूपमिदं कार्यं युज्यते लोकवेदयोः ॥ २१ ॥**

लोकवेदयोः प्रवर्तकस्यैकरूपत्वे लाघवं, भिन्नरूपत्वे गौरवमिति भावः ॥ २१ ॥

प्रतिपादितपूर्वपक्षार्थमुपसंहरति—

**एवं कामिनियोज्यस्य क्रियास्थायित्वकल्पने ।**
**उपपत्तेरसङ्गत्या नापूर्वं तु लिङोच्यते ॥ २२ ॥**

नियोज्याभिधायकस्वर्गकामपदसमभिव्याहारस्य क्रियास्थायित्वकल्पनेऽप्युपपन्नत्वात् [सङ्गतिग्रहणाभावाच्च] न लिङाद्यभिधेयत्वमपूर्वस्येत्यर्थः ॥ २२ ॥

अत्र सिद्धान्तमाह—

**तदिदं न सहन्ते हि गुरुवर्त्मानुसारिणः ।**

अत्र हेतुद्वयमाह—

**स्थायितानुपपत्तेश्च व्युत्पत्तेश्चोपपत्तितः ॥ २३ ॥**

आद्यहेतुसमर्थनार्थं पूर्वोक्तं दूषयितुमनुवदति—

**यदिदं कामिसिद्ध्यर्थं क्रियास्थायित्वकल्पनम् ।**
**तल्लोके क्षणिकत्वेन [1] प्रतीतायामसङ्गतम् ॥ २४ ॥**

प्रत्यक्षेण क्रियाक्षणिकत्वावगमाद्विरुद्धं [2] स्थायित्वकल्पनमित्यर्थः ॥ २४ ॥

ननूक्तमेव क्रियायाः स्थायित्वं, न प्रत्यक्षविरुद्धं, फलनाश्यत्वेन क्रियायाः [3,4] प्रत्यक्षतोऽवगमादित्यत्राह—

**फलनाश्यतया ज्ञानं यत्क्रियायाः समीरितम् ।**
**[5] तत्तत्र कारकाधारफलेनैव च नान्यथा ॥ २५ ॥**

सत्यं, क्रियायाः फलेन विनाश्यत्वं लोकतोऽवगतम्, तत्तु कारकाश्रितेन फलेन । अतो न लोकवद्वेदे वक्तुं शक्यत इत्यर्थः ॥ २५ ॥

तत्कथमेवं वैषम्यमित्याशङ्क्योपपादयति—

**लोके हि कारकगतं फलं नाशयति क्रियाम् ।**

---

[1] प्रतीताया असङ्गतम्—क. घ. [2] स्थायित्वं न कल्प्यत इत्यर्थः—घ. [3] प्रत्यक्षतोऽवगतत्वादित्यर्थः—क. [4] प्रत्यक्षत्वोपगमादित्यर्थः—ङ. [5] तत्तत्कारकयुक्तेन क—घ.

या क्रिया यत्र समवेता जायते सा तत्रैवोत्तरसंयोगं जनयित्वा विनश्यतीति विद्यत एव तत्र कारकाश्रितफलविनाश्यत्वम्। यागक्रियायास्तु [1] फलविनाश्यत्वं न विद्यत इत्यर्थः ॥

ननु स्वर्गात्मकस्य फलस्य कथं कारकाश्रितत्वाभावः। येन न तद्विनाश्यत्वमित्यत्राह—

**येन युक्ता क्रिया भाति तत्कारकमितीर्यते ॥ २६ ॥**
**यदा तु स्वर्गयोगोऽस्य न योगः क्रियया [2] तदा।**
**ततःफलेन तेनात्र क्रियाया न विनाश्यता ॥ २७ ॥**

"क्रियां कुर्वद्धि कारकं" इति हि कारकलक्षणम्। तथा च यागानुष्ठानदशायां यदात्मनः कारकत्वमस्ति तत्तु स्वर्गात्मकफलयोगित्ववेलायां नास्ति। तदानीं क्रिया-योगाभावात्। अतः स्वर्गात्मकफलस्य कारकावस्थाश्रितत्वाभावान्न यागक्रियायास्तेन फलेन विनाश्यत्वं संभवतीत्यर्थः ॥ २६—२७ ॥

ननु लोके वा कथं कारकाश्रितत्वं फलस्य, कथं वा तेन फलेन क्रियाया विनाश इत्यत्राह—

**लोके हि फलनाश्यत्वं क्रियायाः खलु युज्यते।**
**यत्क्रियायोगि तद्वस्तु कारकं परिकीर्त्यते ॥ २८ ॥**

**सम्बन्धात्मा च योगोऽयं विना हेतुं न नश्यति।**
**हेतुः सम्बन्धनाशो वा विरोधिगुण एव वा ॥ २९ ॥**

**विरोधिगुणराहित्यादाद्य एवावशिष्यते।**
**न च सम्बन्ध[3]नाशेऽपि क्लृप्तोऽन्यो हेतुरस्ति हि ॥ ३० ॥**

**उत्पन्नं फलमेवार्थाश्रितं तन्नाशकं मतम्।**
**आद्ये फलक्षणे कर्म कारकं फलमेव च ॥ ३१ ॥**

**एवं चास्ते फलस्यापि कारकाश्रितता ततः।**
**फलेनैव विनाश्यत्वं क्रियाया लोक इष्यते ॥ ३२ ॥**

क्रियायोगित्वं हि कारकत्वम्। क्रियायोगोऽस्यास्तीति क्रियायोगीति वक्तव्यम्। तथा च सम्बन्धात्मकस्य योगस्य कारणमन्तरेण विनाशायोगात्कारणेन भवितव्यम्। तच्च कारणं द्विविधमेव। सम्बन्धिनाशो वा, विरोधिगुणप्रादुर्भावो वा। [4] तत्र विरोधि-गुणप्रादुर्भावाभावात्सम्बन्धिनाश एव शिष्यते। सम्बन्धिनौ चात्र क्रियाऽऽत्मानौ। तत्र चात्मनो नित्यत्वेन क्रियात्मन एव सम्बन्धिनो नाशो वक्तव्यः। स च हेतुमन्त-

---

[1] तादृक् फलविनाश्यत्वम्—ग. [2] तथा—क, घ. [3] नाशो हि—घ. [4] अत्र—क.

रेण नोपपद्यत इत्युत्पन्नेन फलेनैकार्थसमवायिना क्रियाया विनाश इति [वक्तव्यम्।] आद्ये फलोत्पत्तिक्षणे क्रिया कारकं फलं चेति विद्यत एव फलस्य कारकाश्रितत्वम्। अतस्तेनैव फलेन विनाश्यत्वं लोके क्रियाया इत्यर्थः ॥ २८–३२ ॥

न त्वेवं वेदे स्वर्गस्य क्रियां प्रति नाशकत्वं वक्तुं शक्यम्। कारकावस्थाश्रितत्वाभावादित्याह—

**न च यागक्रियायास्तु युज्यते स्वर्गनाश्यता।**

ननु क्रियायाः स्थायित्वं कल्प्यताम्, फलपर्यन्तं क्रियावस्थानस्य विद्यमानत्वेन कारकावस्थाश्रितत्वमपि विद्यत इति कथं न तेन फलेन विनाश्यत्वमित्याशङ्क्य क्रियायाः स्थायित्वमयुक्तम्। आश्रितत्वैकस्वभावायाः [क्रियायाः] स्थाय्याश्रयाभावादित्याह—

**यदि क्रिया स्थायिनी स्यात्कुत्रासाववतिष्ठते ॥ ३३ ॥**

[1] 'कुत्रासावतिष्ठते' इत्यनेन किमात्माश्रिता क्रिया, अथ व्यवत्तादिद्रव्याश्रिता, अथ वा तत्परमाण्वाश्रितेति विकल्पोऽभिप्रेत इत्यर्थः ॥ ३३ ॥

आत्माश्रिता क्रिया भविष्यति। स्थिरत्वादात्मन इत्याद्यं पक्षं दूषयति—

**न तावदात्मनिष्ठा सा निष्क्रियत्वेन चात्मनः।**

व्यापकत्वेनाऽऽत्मनो निष्क्रियत्वादात्माश्रितत्वं क्रियाया न युक्तमित्यर्थः ॥

ननु देवतोद्देशेन द्रव्यत्यागात्मकस्य[यागादेः]पुरोडाशादिप्रक्षेपान्तत्वाद्व्यवत्तादिद्रव्याश्रितत्वं भविष्यतीति द्वितीयं शङ्कते—

**अथोच्येत व्यवत्तादिद्रव्याधारेति,**

परिहरति—

**तच्च न ॥ ३४ ॥**

**द्रव्यस्य भस्मसात्कारादग्निना होममात्रतः।**

अग्निना भस्मीभूतस्य पुरोडाशादिद्रव्यस्य स्थायिक्रियाश्रयत्वमनुपपन्नमित्यर्थः ॥ ॥ ३४ ॥

[2] ननु कार्यद्रव्यस्याग्निना भस्मीभावेऽप्यणू[3]नां नित्यत्वेन स्थिरक्रियाश्रयत्वं भविष्यतीति तृतीयं पक्षमनूद्य परिहरति—

**अथोच्येताणुनिष्ठेति तन्नान्याश्रयधीर्यतः ॥ ३५ ॥**
**क्रियान्यस्मिन्न प्रसूते फलं भिन्नाश्रयत्वतः।**

---

[1] न कुत्राप्यवतिष्ठत—घ. [2] ननु द्रव्यस्य—क. ङ. [3] नामग्निनिष्ठत्वेनस्थिरत्वात् क्रियाश्रयत्वं—घ.

अण्वाश्रितायाः क्रियाया आत्मनि फलजनकत्वमनुपपन्नम् । अन्याश्रितायाः क्रियाया आश्रयान्तरे फलजनकत्वाभावादित्यर्थः ॥ ३५ ॥

ननु क्रियास्थायित्वाभावे किं तर्हि स्थिरं फलजनकमित्यत्राह—

**ततश्च क्षणभङ्गिन्याः क्रियायाऽफलसम्भवः ॥ ३६ ॥**
**न विद्यत इति स्थायिनोऽपूर्वात्फलसम्भवः ।**

यस्मात्कारणात्क्रियायाः फलजनकत्वं नास्ति तस्मादपूर्वस्य स्थायितया फलजनकत्वं युज्यत इत्यर्थः ॥ ३६ ॥

एवं क्रियायाः स्थायित्वकल्पनमङ्गीकृत्य दूषणान्युक्तानि । सम्प्रति तदेवानुपपन्नम् । कल्पकाभावादित्याह—

**ननु क्रियास्थायितायाः किं वा कल्पकमुच्यताम् ॥ ३७ ॥**

किमपि कल्पकं नास्तीत्यर्थः ॥ ३७ ॥

कल्पकमाशङ्कते—

**फलसाधनभावेन यागस्य श्रुतिरेव चेत् ।**

तदेव दुष्टमित्याह—

**परस्पराश्रयस्तर्हि साधनं च क्रिया स्थिरा ॥ ३८ ॥**
**स्थिरताकल्पनं चात्र साधनत्वश्रुतेर्बलात् ।**

कथं तावत्क्रिया क्षणभङ्गिनी कालान्तरभाविफलसाधनमित्युक्ते स्थायित्वकल्पनयेति वाच्यम् । स्थायित्वकल्पनं च फलसाधनभावेनेत्येव[1]मन्योन्याश्रय इत्यर्थः ॥ ॥ ३८ ॥

इत्थं क्रियास्थायित्वकल्पनस्यानेकदोषदुष्टत्वेन नियोज्यसमभिव्याहारो नोपपद्यत इत्याह—

**एवं क्रियायाः स्थिरताकल्पनं बहुदोषभाक् ॥ ३९ ॥**
**अतो नियोज्यसमभिव्याहारो नोपपद्यते ।**

अत्र लौकिकाभाणकमप्युदाहरति—

**आभणन्त्यत्र च न्यायं लोके यो हि यदिच्छति ॥ ४० ॥**
**तत्करोति न वा तस्यासाध्यत्वं तस्य साधनम् ।**

---

[1] मनेकाश्रय—ङ.

किमुक्तं भवतीत्याशङ्क्य पूर्वोक्तमर्थं स्मारयति—

काम्यस्वर्गविशिष्टोऽत्र नियोज्यश्चावगम्यते ॥ ४१ ॥
तच्च काम्यं देशकालदेहान्तरभवं ततः ।
स्वकाम्यसाधनं सोऽपि कार्यत्वेनावबुध्यते ॥ ४२ ॥
कार्यत्वेन [1]च नावैति क्रियां तु क्षणभङ्गिनीम् ।
अपि तु स्थायि [2]यद्वस्तु तत्कार्यं प्रतिपद्यते ॥ ४३ ॥
अतो लिङादिपदतोऽपूर्वप्रत्यय इष्यते ।

एवं क्रियास्थायित्वकल्पनस्यानुपपत्तिरूपं प्रथमहेतुमुपपाद्य "व्युत्पत्तेश्चोपपत्तितः" इति द्वितीयहेतुसमर्थनार्थं लिङादीनामपूर्वे व्युत्पत्तिराहित्यं यदुक्तं तद्दूषयितुमनुवदति—

यच्चाभ्यधायि व्युत्पत्तिर्नापूर्वे विद्यते लिङः ॥ ४४ ॥

दूषयति—

इत्येतदपरामृष्टगुरुतन्त्रस्य भाषितम् ।

गुरुमताभिज्ञो नैवं भाषत इत्यर्थः ॥

किंविधं तु तन्मतं तत्राह—

यतस्तत्र परामृष्टं स्थाय्यपूर्वं लिङादयः ॥ ४५ ॥
वदन्ति कामिसमभिव्याहारादिति तन्मतम् ।

ननूक्तमेव प्रमाणस्मृत्योरन्यतरत्वेन तर्कस्य वर्णनमिति तत्राह—

कृत्वा विकल्पं यत्तर्कदूषणं विहितं पुरा ॥ ४६ ॥

तर्कस्य [3]स्मृतित्वाङ्गीकारेण तद्दूषयति—

तदप्यसङ्गतं तर्कः स्मृतिरित्युच्यते यतः ।

ननूक्तमेव तर्कस्य स्मृतित्वे तन्मेयस्यापूर्वत्वविरोध इति तत्राह—

नापूर्वत्वविरोधोऽपि प्राग्भवानुभवोद्भवात् ॥ ४७ ॥
संस्काराज्जायते बुद्धिस्तादृशीत्यवधारणात् ।

---

[1] तु—क.　[2] तद्वस्तु—क.　[3] स्मृतित्वाङ्गीकरणेन—ङ.

पूर्वजन्मसंबन्धिनोऽनुभवात्संस्कारो जायते। संस्काराच्च परामर्शात्मिका बुद्धिर्जायते। तया च परामृष्टं स्थायिकार्यं लिङादिभिरभिधीयत इति नापूर्वत्वविरोध इति भावः ॥ ४७ ॥

ननु पूर्वस्मिन्नपि जन्मन्यनुभवगोचरत्वेनापूर्वत्व[1]विरोधोऽस्त्येवेत्यत्राह—

**प्राग्भवे वेदवाक्यानुभवोत्था वासना [2]स्थिरा ॥ ४८ ॥**
**पुनस्तच्छ्रवणेनासावुद्बुद्धा जनयेत्स्मृतिम्।**

पूर्वस्मिन्नपि जन्मनि यदि प्रत्यक्षाद्यनुभवगोचरत्वं स्यात् तदाऽपूर्वत्वविरोधः स्यादेव। अत्र तु वेदवाक्यादेवापूर्वानुभवो जातः संस्कारं जनयति। स च संस्कारोऽस्मिन् जन्मनि वेदवाक्य[3]श्रवणेन समुद्बुद्धः स्मृतिं जनयतीति नापूर्वत्वविरोध इति भावः ॥ ४८ ॥

न चैतददृष्टचरम्। अन्यत्रापि दृष्टत्वादित्याह—

**बालस्य स्तन्यपानादौ प्रवृत्तेर्गतिरीदृशी ॥ ४९ ॥**
**लोके वेदेऽपि च तथा वासनातः स्मृतेर्जनिः।**
**स्मृत्याऽपूर्वं परामृष्टं लिङादीनि पदान्यपि ॥ ५० ॥**
**वदन्तीति कुतस्तेषां स्याद्व्युत्पत्त्यनपेक्षता।**

जातमात्रस्य शिशोर्मातुः स्तन्यपानादौ कथं प्रवृत्तिरित्यत्र प्राग्भवीयवासनावशादिति वक्तव्यम्। एवमेवात्रापि प्राग्भवीयवेदवाक्यानु[4]भवसमुत्पन्न[5]वासनाबलात्स्मृत्यारूढमपूर्वं लिङादिपदान्यभिदधतीति न तेषां व्युत्पत्त्यनपेक्षत्वमित्यर्थः ॥ ४९—५० ॥

एवं तर्को नाम स्मृतिरित्युक्तम्। सम्प्रति प्रमाणरूपतायामपि न दोष इत्याह—

**यद्वा प्रमाणं तर्कोऽस्तु स्थाय्यस्तीत्येवमाकृतिः ॥ ५१ ॥**
**परामर्शात्मिका साऽपि विरुद्धा नान्यमेयता।**
**व्युत्पत्तावुपयुक्तेन प्रमाणेन हि मेयता ॥ ५२ ॥**
**अतो मानान्त[6]रामेयत्वेनापि न विरुध्यते।**
**[7] मानात्मकेन तर्केण स्मृतिरूपेण वा पुनः ॥ ५३ ॥**
**परामृष्टं स्थायिकार्यं प्रवदन्ति लिङादयः।**

---

1 विरोधोऽस्तीत्यत्राह—घ. 2 स्थिता—ङ. 3 श्रवणसमुद्बुद्धः—क. 4 भवसंस्कारस—ङ.
5 वासनालाभात्स्मृ—ङ. 6 रापूर्वत्वेनापि—क. ङ. 7 मानार्थकेन —घ.

"स्वर्गकामो यजेत" इत्यत्र कालान्तरभाविस्वर्गसाधनं किंचित्स्थाय्यस्तीति परामर्शो जायते। तेन च परामृष्टमपूर्वं लिङादयः प्रमापयन्ति। न चापूर्वत्वविरोधः। व्युत्पत्त्युपयुक्त[1]मानव्यतिरिक्तमानामेयत्वमपूर्वत्वमिति निर्वचनात्। तथा च तर्कः प्रमाणरूपो वाऽस्तु स्मृतिरूपो वा। सर्वथा तर्कात्मकपरामर्शोपस्थापितमपूर्वं लिङादयो बोधयन्तीति सुस्थमिति भावः॥ ५१–५३॥

नन्वेकं सन्धित्सतोऽपरं प्रच्यवत इत्याह—

अहो नियोज्यसमभिव्याहाराद्यदि लिङ्पदम्॥ ५४॥
[2] वदेदपूर्वं तर्ह्यस्य साधनत्वं न साध्यता।
एवं च कृतिसाध्यत्वात्प्राधान्यं व्याहतं तु यत्॥ ५५॥
कृतिसाध्यं प्रधानं यदित्यत्रैतच्च हीयते।

स्वर्गकामपदसमभिव्याहारात्खलु क्षणभङ्गिन्याः क्रियायाः कालान्तरभाविफलसाधनत्वानुपपत्त्या स्थाय्यपूर्वस्य लिङादिवाच्यताऽङ्गीक्रियते। तथाचापूर्वस्य साधनत्वापत्त्या प्राधान्यं न स्यादिति भावः॥ ५४–५५॥

इति चेदुच्यतेऽपूर्वफलसाधनता तु या॥ ५६॥
स्वरूपोपस्थापने स्याद्व्याहारः परिकीर्त्यते।
लिङादिवाच्यतायां तु नास्या व्याहार इष्यते॥ ५७॥
कृतिसाध्यतयैवार्थं वदन्ति हि लिङादयः।

अपूर्वं तावत्फलेनोपस्थाप्यते। न तु तथैव लिङादिभिरभिधीयते। अपि तु कृतिसाध्यतया प्राधान्येनैवाभिधीयते। तेन नियोज्याभिधायकस्वर्गकामपदसमभिव्याहारबलात्क्रियातिरिक्तस्थाय्यपूर्वस्य कृतिसाध्यतया प्राधान्येन लिङादिभिरभिधानान्न कश्चिद्विरोध इति भावः॥ ५६–५७॥

अत्र प्राप्तावकाशः प्रत्यवतिष्ठते—

नन्वपूर्वं फलं चेति द्वयस्यात्र हि साध्यता॥ ५८॥
साध्यद्वयपरत्वेन वाक्यभेदः प्रसज्यते।

अयं भावः—यजेतेत्यत्रापूर्वं तावत्कृतिसा[3]ध्यत्वेनाभिधीयते प्रधानतया। स्वर्गकाम इत्यत्र च स्वर्गोऽपि [4]काम्यत्वेन साध्यतयाऽभिधीयते। तथा च साध्यद्वयं विदधदेकं वाक्यं भिद्येत। ततश्च वाक्य[5]भेदो दोषः। 'संभवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यते' इति न्यायादिति॥ ५८॥

---

[1] मानवृत्तिव्यतिरिक्त—घ. [2] तदेव पूर्वं—ङ. [3] ध्यतयाऽभिधीयते—क. [4] काम्यमानत्वेन—क. ग. [5] भेददोषः—ग. घ.

तत्परिहरति—

**उच्यते साध्यभावेऽपि फलं कामिविशेषणम् ॥ ५९ ॥**
**अतोऽनुगुणसाध्यत्वाद्वाक्यभेदो न युज्यते ।**

सत्यम्, अपूर्वस्वर्गात्मकसाध्यद्वयमत्र प्रतीयते । तथाऽपि स्वर्गात्मकस्य साध्यस्य नियोज्यविशेषणत्वेनैवाभिधानादपूर्ववत्प्रधानतया वाक्यार्थत्वेनाभिधानाभावात्तत्सा[1]ध्यत्वं वाक्यभेदावहं न भवति । वाक्यभेदो हि तत्र भवति, यत्र प्रधानतयैव साध्यद्वयं प्रतीयते । अत्र तु स्वर्गसाध्यत्वं अपूर्वसाध्यत्वं न विरुणद्धि । अनुगुणत्वात् । वाक्यभेदो हि श्रुतनिखिलपदानां सम्भूयकारित्वं व्युत्पत्तिसिद्धमवसादयन् वाक्यस्याबोधकत्वमापादयन् दोषो भवति । अत्र तु साध्यस्वर्गविशिष्टनियोज्याश्रितयागविषयकृतिसाध्यरूपार्थं बोधयत्येकं वाक्यम् । अतो न दोष इति भावः ॥ ५९ ॥

प्रकारान्तरेणापि वाक्यभेदो नास्तीत्याह—

**अपूर्वफलयोरेकलोलीभावेन साध्यता ॥ ६० ॥**

यदि भिन्नं साध्यद्वयमेकस्मिन् वाक्ये स्यात्तदा वाक्यं भिद्येत । न च तथा, अपूर्वफलयोरेकसाध्यत्वात् । अतो न दोष इत्यर्थः ॥ ६० ॥

यद्वाऽपूर्वमेव साध्यं फलपर्यन्तं विवर्धते । जातिरिव व्यक्तिपर्यन्तम् । इयमेव मुख्यविवृद्धिरित्युच्यत इत्याह—

**फलस्य साध्यता मुख्यविवृद्ध्या वा न दोषभाक् ।**

सर्वथा [2] वाक्यभेदो नास्त्येवेति भावः ॥

युक्तं चैतदित्याह—

**अत एव नियोज्यस्य [3] स्वसिद्धावुपकुर्वतः ॥ ६१ ॥**
**फलं यत्तदपूर्वं च स्वप्राधान्यं च [4] नोज्झति ।**

आत्मसिद्ध्यनुकूलस्य नियोज्यस्य प्रसिद्धये ।
कुर्वत्स्वर्गादिकमपि प्रधानं कार्यमेव नः ॥ (प्रकरण—वाक्यर्थ. श्लो. २७).

इति शालिकानाथेनोक्तत्वादिति भावः ॥ ६१ ॥

उक्तमर्थं लौकिकदृष्टान्तकथनेन [5] द्रढयति—

**यथा हि गर्भदासाय स्वामी भृत्यादिदानतः ॥ ६२ ॥**
**उपकुर्वन्नपि स्वस्य प्राधान्यं न विमुञ्चति ।**

1 ध्यं—ङ. 2 साध्यभे—क 3 प्रसि—ङ. 4 नो इति—ङ. 5 प्रथयति—क. ङ.

यथा हि स्वामिनो गर्भदासाय भृतिदानादिनोपकुर्वतोऽपि न प्राधान्यपरित्यागः, तद्वदपूर्वस्यापि स्वसिद्धावनुकूलव्यापाराय कामिनियोज्याय स्वर्गादिफलं प्रयच्छतो न प्राधान्यपरित्याग इति भावः ॥ ६२ ॥

अत्रैकदेशिनां मतं दूषयितुमुपन्यस्यति—

केचिदाहुर्लिङा कार्यसामान्यमभिधीयते ॥ ६३ ॥
ततश्च निर्विशेषस्य सामान्यस्याप्रतीतितः ।
क्रियारूपापूर्वरूपविशेषस्त्वभिधीयते ॥ ६४ ॥

ते खल्वेवं मन्यन्ते । लिङादीनां तावत्कार्यसामान्यमर्थः । तथा च निर्विशेषसामान्यस्यापर्यवसानात्क्रियारूपापूर्वरूपविशेषप्रतिपत्तिरित्यर्थः ॥ ६३–६४ ॥

तदेतद्दूषयति—

इत्यसङ्गतमेवैतत्प्रागुक्तेनैव वर्त्मना ।
कार्यस्वरूपमेवानुगतं यल्लोकवेदयोः ॥ ६५ ॥

पूर्वोक्तमार्गेण कार्यस्वरूपस्यैव लोकवेदयोरनुवृत्तत्वान्न सामान्याभिधायकत्वं वक्तव्यमित्यर्थः ॥ ६५ ॥

किं चाख्यातानां व्यक्तिवाचकत्वस्यैवावधृतत्वान्न सामान्याभि[1]धायकत्वं युक्तमित्याह—

न च सामान्यवाचित्वं लिङादेर्व्यक्तिवाचिनः ।

एकदेश्यन्तरमतं दूषयितुमुपन्यस्यति—

अत्र केचन मन्यन्ते लोकव्युत्पत्तिवर्त्मना ॥ ६६ ॥
कार्यत्वेन क्रियैवाभिधीयतां फलहेतुता ।
तस्या एवास्तु यदि सा क्षणिकाया न विद्यते ॥ ६७ ॥
तदा तदुपपत्त्यर्थमपूर्वं कल्प्यतामिति ।

लोके वृद्धव्यवहारबलाल्लिङादीनां क्रियाकार्य एव व्युत्पत्तिदर्शनात्तदेवात्र कार्यत्वेनाभिधीयते । फलसाधनत्वं च [2]तत्रैवास्तु । न च क्षणभङ्गिन्याः क्रियायाः कालान्तरभाविफलसाधनत्वमनुपपन्नम् । क्रियाफलयोर्मध्येऽपूर्वकल्पने सति तदुपपत्तिरित्येकदेशिनो मन्यन्त इत्यर्थः ॥ ६६–६७ ॥

---

[1] धायित्वं—घ. [2] तस्या एवा—घ.

अपूर्वकल्पनमपि क्रियास्थायित्वकल्पनवदन्योन्याश्रयग्रस्तत्वादयुक्तमिति परिहरति—

**तन्नोपपद्यतेऽन्योन्यसंश्रयः स्यात्तदा यतः ॥ ६८ ॥**

अन्योन्याश्रयमेव प्रतिपादयति—

**तथा हि क्षणभङ्गिन्याः क्रियायाः फलहेतुता ।**
**युज्यते कथमित्युक्तेऽपूर्वकल्पनयेत्यपि ॥ ६९ ॥**
**वाक्यं तु कल्पनामूलं फलहेतुतया श्रुतेः ।**
**अतो न तन्मतं,**

अपूर्वकल्पनेन क्रियायाः फलसाधनत्वं, फलसाधनत्वे चापूर्वकल्पनमित्यन्योन्याश्रय इत्यर्थः ॥ ६९ ॥

सर्वथा क्रियाया एव फलसाधनत्वं वक्तव्यम् । तदा 'धर्मिकल्पनातो वरं धर्मकल्पने' ति न्यायात्क्रियायाः स्थायित्वमेव धर्ममात्रं स्यान्न त्वपूर्वं धार्मीत्याह—

**किं च धर्मिणः कल्पनाद्वरम् ॥ ७० ॥**
**धर्मस्य कल्पनमिति कल्प्येत स्थायिता तदा ।**

ननु तर्हि क्रियायाः फलसाधनभावोपपत्त्यर्थं स्थायितैव कल्प्यतामित्याशङ्कमानं प्रत्याह—

**न साऽपि युज्यते दोषादिति पूर्वं समीरितम् ॥ ७१ ॥**

प्रत्यक्षविरोधाद्यनेकदोषदुष्टतया स्थायित्वकल्पनमनुपपन्नमिति पूर्वमेव निराकृतत्वा[1]दिति भावः ॥ ७१ ॥

एवं चापूर्वकल्पनावाचोयुक्तिर्न युक्तिमतीत्युपसंहारति—

**तस्मान्न युज्यतेऽपूर्वपरिकल्पनभाषणम् ॥ ७१½ ॥**

॥ इत्यहोबलदेवविरचितायां वाक्यार्थरत्नतात्पर्यप्रकाशिकायां
सुवर्णमुद्रिकायां क्रियास्थायित्वनिराकरणं
नाम द्वितीयः परिच्छेदः ॥

---

[1] दित्यर्थः—ब.

## तृतीयः परिच्छेदः

[1] श्रीरामो दक्षिणामूर्तिः कृष्णो वाऽर्जुनदेशिकः ।
हृदि यस्य स्थितो वाचस्तस्य सन्ति सुधीप्रियाः ॥ १ ॥

एवं तावत्क्रियायाः स्थायित्वनिराकरणेनापूर्वस्य लिङाद्यभिधेयत्वं प्रतिपादितम् । सम्प्रति यागस्य फलसाधनभावोपपत्त्यर्थमपूर्वकल्पनैव लघीयसीति विप्रतिपत्तिनिराकरणार्थस्तृतीयपरिच्छेद आरभ्यते ॥

अत्र भावनावाक्यार्थवादिनां मतं दूषयितुमुपन्यस्यति—

अत्र केचन वाक्यार्थं प्रवदन्तोऽर्थभावनाम् ।
अपूर्वकल्पनामेव मन्यन्ते हि लघीयसीम् ॥ २ ॥

तैरप्यपूर्वं कल्प्यमित्यभिधानात्तन्मतोपन्यासः ॥ २ ॥

कथं तेषामपूर्वप्रक्रियेत्याशङ्क्य तेषां प्रतिपादनप्रक्रियामाह—

"स्वर्गकामो यजेतेति" गीयते भावनाद्वयम् ।
अभिधाभावना चार्थभावना च लिङादिना ॥ ३ ॥

तच्च स्वभावतो भाव्यमुख्यत्रितयमिच्छति ।
इतिकर्तव्यता भाव्यं करणं चेति तत्त्रयम् ॥ ४ ॥

अयमर्थः—लिङादियुक्तवाक्येषु द्वे भावने अवगम्येते । शब्दभावना अर्थभावना चेति । तयोश्च प्रत्येकं भाव्यकरणेतिकर्तव्यताकाङ्क्षाऽस्ति । अंशत्रयावऽच्छिन्नस्वभावत्वादिति ॥ ३–४ ॥

कथं तर्हि द्वयोर्भावनयोरंशत्रयनिरूपणमित्याशङ्क्याभिधाभावनायास्तावदादौ त्रितयमपि दर्शयति—

[2] तत्राभिधाभावनाया भाव्या स्यादर्थभावना ।
करणं लिङ् चार्थवादा इतिकर्तव्यता मताः ॥ ५ ॥

---

[1] अयं श्लोकः क. घ. पुस्तकयोर्नोपलभ्यते.   [2] अत्राभिधा—ङ.

शब्दभावनायाः पुरुषप्रवृत्तिरूपार्थभावना भाव्या । [1]लिङादिपदं तदर्थयोर्वाच्यवाचकसम्बन्धो वा योग्यतया करणम् । योग्यत्वादेवार्थवादिकी स्तुतिरितिकर्तव्येत्यर्थः ॥ ५ ॥

अर्थभावनाया अपि त्रितयमभिधीयत इत्याह—

**वाच्यं तु करणाद्यर्थभावनाया अपि त्रयम् ।**

किं तत्त्रयमित्याशङ्क्याह—

**अत्र श्रुत्या समपदोपादानात्मत[त्मिक]या यजेः ॥ ६ ॥**

**भाव्यत्वमवगम्येत भावनां प्रति यद्यपि ।**
**तथाप्यपुरुषार्थत्वाद्यागस्य न हि भाव्यता ॥ ७ ॥**

**किं तु स्वर्गस्य भाव्यत्वं पुरुषार्थत्वहेतुना ।**
**पदान्तरोपात्तस्यापि योग्यत्वादवगम्यते ॥ ८ ॥**

अर्थभावनायास्तु "स्वर्गकामो यजेत"इत्यत्र स्वर्गस्यैव पुरुषार्थत्वेन भाव्यत्वम् । यद्यपि यजेतेति समानो[नपदो]पादानलक्षणया श्रुत्या यागस्य भाव्यत्वमवगम्यते । तथाऽपि यागस्य क्लेशात्मकत्वेन पुरुषार्थत्वाभावात्तत्परित्यज्य पदान्तरोपात्तस्यापि स्वर्गस्य पुरुषर्थत्वेन भाव्यत्वमवश्यमङ्गीकरणीयम् । श्रौतान्वयाभावेऽपि वाक्यान्वयस्यापि मुख्यत्वादित्यर्थः ॥ ६–८ ॥

अस्तु स्वर्गस्य भाव्यत्वम् । कस्य तर्हि करणत्वमित्यत्राह—

**सिद्धे स्वर्गस्य भाव्यत्वे प्रकृत्यर्थतया यजेः ।**
**करणत्वं च योग्यत्वादुपपन्नं तथा सति ॥ ९ ॥**

**क्षणिकत्वेऽपि यागस्यापूर्वकल्पनयाऽन्तरा ।**

उक्तप्रकारेण [2]स्वर्गस्य भाव्यतयाऽन्वये सति प्रकृत्यर्थस्य योग्यत्वात्करणत्वं भवति । न च क्षणिकस्य यागस्य कालान्तरभाविफलं प्रति करणत्वानुपपत्तिः । मध्येऽपूर्वकल्पनया तदुपपत्तेः । यागस्य करणत्वेनान्वये सति [3]प्रयाजादीनीतिकर्तव्यतात्वं प्राप्नुवन्तीत्यर्थभावनाया अंशत्रयमित्यर्थः ॥ ९ ॥

एवं च निरङ्कुशे यागस्यापूर्वसाधनतया करणत्वे 'यागेन स्वर्गं भावयेदि'ति तन्मते वाक्यार्थः संपद्यत इत्याह—

**यागेन भावयेत्स्वर्गमिति वाक्यार्थ इष्यते ॥ १० ॥**

---

[1] लिङादिपदतदर्थ—घ. [2] स्वर्गे भाव्यतयान्विते सति—घ. [3] प्राच्योदीच्यादी—क. ख. घ.

एवं भावनावाक्यार्थत्ववादिनो यागस्य करणत्वनिर्वाहायापूर्वकल्पनामेव लघुतरां सङ्गिरन्त इत्यर्थः ॥ १० ॥

तदेतत्परिहरति—

इत्येतच्च मतं युक्तं न यागः करणं फले ।
योग्यत्वे सति युज्येत यथा वह्निर्निषेचने ॥ ११ ॥

सत्यम्, एषा प्रक्रिया तदैवं संपद्येत, यदा यागस्य करणत्वं वाक्यतोऽवगम्येत । न चैतदस्ति । अयोग्यतया यागकरणत्वस्य शब्देनैवानभिधानात् । यथा हि वह्नेः सेकसाधनत्वमयोग्यत्वेन शब्दो नाभिधत्ते, तथैव कालान्तरभाविफलं प्रति क्षणभङ्गिनो यागस्य करणत्वं शब्दो नाभिधत्ते । ततो न तन्मूलमपूर्वकल्पनं युक्तमित्यर्थः ॥ ११ ॥

यच्चोक्तमर्थभावनाया भाव्याकाङ्क्षायां स्वर्गस्य भाव्य[1]त्वेनान्वय इति तदपि नास्तीत्याह—

लिङादियुक्तवाक्येषु भावना न ह्यपेक्षते ।
भाव्यान्तरमपूर्वस्य लिङ्पदेनाभिधानतः ॥ १२ ॥

अपूर्वस्य [2]लिङादिनाऽभिहितत्वात्तेनैव भावनाया भाव्याकाङ्क्षापरिपूरणान्न स्वर्गादिभाव्यान्तराकाङ्क्षेत्यर्थः ॥ १२ ॥

ननु लिङ्पदमपूर्वा[3]भिधानमात्रेण चरितार्थं भवन्मते न भावनामभिधत्ते । तथा च कथं भावनाया भाव्याकाङ्क्षापरिपूरणमित्यत्राह—

प्रधानभूतापूर्वोपसर्जनीभावतो लिङा ।
अभिधीयत एवार्थभावनेति समीरितम् ॥ १३ ॥

सत्यम्, अपूर्वाभिधायित्वेऽपि लिङादिनोपसर्जनत्वेन भावनाभिधानमपि नानुपपन्नमित्यर्थः ॥ १३ ॥

ननु लिङादिना प्रधानापूर्वोपसर्जनत्वादिनाऽर्थभावनाभिधानं गुरुतन्त्रे क्वापि न प्रसिद्धमित्यत्राह—

कृतिसाध्यतयाऽपूर्वस्याभिधानाल्लिङादिभिः ।
अपूर्वं भाव्यमेवार्थभावनाया न चेतरत् ॥ १४ ॥

---

1 त्वेन सम्बन्ध इति—ग. घ.  2 लिङ्पदेनाऽभि—क. ख.  3 भिधानेन चरितार्थ—ग.

अपूर्वं तावत्कृतिसाध्यतया लिङादिभिरभिधीयते। कृतिश्च पुरुषप्रयत्नः । स एवार्थभावनाशब्देनाभिधीयते । अतोऽत्र कृतिसाध्यत्वेनापूर्वस्याभिधानात्कृत्यपरपर्यायार्थभावनाया अप्यपूर्वमेव भाव्यं, नान्यदिति भाव्यान्तराकाङ्क्षा नास्तीत्यर्थः ॥ १४ ॥

भावनां प्रति स्वर्गस्य भाव्यत्वाभावादेव यागस्यापि स्वर्गकरणत्वेनान्वयो नास्तीत्याह—

**अतो न करणत्वेन यागस्यान्वय इष्यते ।**

यदि यागस्य करणत्वेन नान्वयः कथं तर्हि प्रकृत्यर्थभूतस्य यागस्य भावनान्वय इत्यत्राह—

**किं त्वस्य विषयत्वेन कृतिं प्रति समीरितः ॥ १५ ॥**

नन्वाकाङ्क्षानुसारेण यागस्य करणत्वेनैवान्वये युक्ते कथं तद्विहाय विषयत्वमभिधीयत इत्यत्राह—

**कृतिसाध्यतयाऽपूर्वे प्रतीते सति सा कृतिः ।**
**भवेत्किंविषयेत्यादावाकाङ्क्षा विषयं प्रति ॥ १६ ॥**
**तदा कृतिमवच्छिन्दन्यागो विषय इष्यते ।**
**सा कृतिर्यागविषयेत्येवं विषयतान्वयः ॥ १७ ॥**

इदमत्राभिप्रेतम्—यागस्याऽऽदौ तावच्छब्दतः करणत्वं न प्रतीयते। अपि त्वाकाङ्क्षानुसा[1]रेणैव पदानामन्वयो भवति। आकाङ्क्षा च लिङ्प्रत्ययार्थभूतेऽपूर्वे कृतिसाध्यतया प्रतिपन्ने सति किंविषयकृतिसाध्यमिति कृतिस्वरूपनिरूपणार्थमेवादौ जायते। न तु कथमिति प्रकाराकाङ्क्षा। अज्ञाते स्वरूपे प्रकारस्यानाकाङ्क्षितत्वात्। जातायां च तथाऽऽकाङ्क्षायां प्रकृत्यर्थभूतो याग एव यागविषयकृतिसाध्यमिति कृतिस्वरूपमवच्छिन्दन् विषयत्वेनान्वेति। प्रथमं शाब्दो विषयत्वेनान्वयः। विषयत्वं विशेषणत्वमवच्छेदकत्वमिति पर्यायाः। तदुक्तमाचार्यैः—" विषयिणं विषिण्वन्ति अनुबध्नन्ति स्वरूपतो निरूपणीयं कुर्वन्तीति यावत् " (साङ्ख्यतत्त्वकौमुदी श्लो. ५) इति। एवं कृतिस्वरूपनिरूपणाकाङ्क्षायां यागः कृतिरपूर्वमिति क्रमेणान्वयः। पश्चात्त्वभाव्यस्यापूर्वस्य कथं कृतिसाध्यत्वमित्याकाङ्क्षायां यागद्वारेणेत्यघटमानं कृत्यपूर्वसंसर्गं मध्ये स्थित्वा

---

1 रेण पदाना—क. ख.

घटयन्यागो घटकत्वेनान्वेतीति कृतिसाध्ययागसाध्यतया कृतिर्यागोऽपूर्वमिति क्रमेणान्वयः। इत्थमवच्छेदकत्वरूपं विषयत्वमेव घटकत्वपर्यन्तमिति भवनाथमिश्रैः शब्दान्तरनये—

कृतितत्साध्यमध्यस्थो यागादिर्विषयो मतः।

कार्ये संघटि[1]ताकारे कारणत्वेन सम्मतः॥ (नयविवेकः अ. २ पा. २ अधि. १)

इत्युक्तम्। एतच्च सर्वं पूर्वतरनिबन्धनेषु शब्दान्तरनये लिप्सासूत्रे च निपुणतरमुपपादितम्। शालिकानाथेन प्रकरणपञ्चिकायाम्—"विषयत्वेनान्वितस्य करणत्वेनान्वयइति न यागस्यादौ करणत्वेनान्वय" इत्यभिहित[2]मिति नादौ करणत्वमाकाङ्क्षितमिति॥ १६–१७॥

ननु यागस्यादौ यदि करणत्वेन नान्वयः कथं तर्हि कामाधिकारे करणीभूतस्य यागस्य विषयत्वेन नित्यकाम्यवैषम्यव्युत्पादनमित्यत्राह—

**न शाब्दं करणत्वं तु किं तूपादानमानतः।**

सत्यम्, यागस्यादौ करणत्वमस्ति। तत्तु न शब्दतः प्रतिपन्नम्। आकाङ्क्षाऽभावादयोग्यत्वाच्च। किं तूपादानप्रमाणात्। उपादानं नाम विध्याक्षेपः। तथा हि—लिङादिभिरभिहितो नियोगो येन विना न पर्यवस्यति [3]तदाक्षिपतीत्यभिधानाभिधेयानुपपत्तिबलायातकल्पनात्मकमुपादानम्। तच्चाभिहितार्थानुपप[4]त्तिबलायातकल्पनारूपश्रुता[5]र्थापत्तिव्यतिरिक्तमिति चतुर्थे निरूपितम्। तथा च यागस्य फलकरणत्वमन्तरेणाभिधानाभिधेययोरपर्यवसानान्नियोगाक्षेपरूपोपादानमेव यागस्य फलकरणत्वं कल्पयतीत्यौपादानिकमेव करणत्वम्। न शाब्दमित्यर्थः॥

ननु यागस्य फलं प्रति करणत्वाभावे नियोगस्याभिधेयस्य काऽनुपपत्तिः। कथं वा तद्बलात्करण[6]त्वपरिकल्पनमित्यत्राह—

**स्वर्गकामस्य हि कृतिर्व्याप्नोति स्वर्गसाधनम्॥ १८॥**

**न च स्वर्गासाधनस्य तत्कृतिव्याप्यता भवेत्।**
**अतोऽत्र करणत्वेन प्रतिसन्धीयते यजिः॥ १९॥**

**इत्युपादानतस्तस्य करणत्वं न शब्दतः।**
**अतो न करणत्वेन यागस्य प्रथमान्वयः॥ २०॥**

इदमत्राभिप्रेतम्—स्वर्गोद्देशेन प्रवृत्ता हि स्वर्गकामकृतिः स्वर्गसाधनमेव व्याप्नोति। स्वर्गं प्रत्यसाधनस्य स्वर्गार्थप्रवृत्तकृतिव्याप्यत्वमनुपपन्नमिति स्वर्गं प्रति

---

[1] ताकाले—क. [2] मित्यादौ करणत्वमनाकाङ्क्षि—क. [3] तदाक्षेप इत्यभिधाना—क. ख.
[4] त्ति-रूपश्रुतार्थापत्ति—क. [5] र्थानुपपत्ति—घ. [6] त्वविकल्पन—ङ.

करणत्वेन [1] नियोज्यो यागमनुसन्धत्ते। करणत्वेनानभिसंहितस्य च स्वर्गकामकृतिव्याप्यत्वरूपविषयत्वाभावात्। विषयत्वाभावे च नियोगस्य विषयनिरूपितकृतिसा[2]ध्यत्वेनाभिधानमनुपपन्नमिति [3] विध्याक्षेपबलादेव यागस्य फलकरणत्वम[4]भिसन्धीयते। तेन च फलं प्रति करणत्वेनाभिसंहितस्यैव यागस्या[5]पूर्वकृतिं प्रति विषयत्वेनान्वयान्नित्यकाम्यवैषम्यमपि सिद्धम्। तथा हि—[6] कामाधिकारे करणांशे फलरागात्प्रवृत्तिः। अङ्गेषु विधिवशान्नित्येषु फलाभावात्साङ्गे प्रधाने विधितः प्रवृत्तिः। करणत्वं हि नानुपकृतस्य भवतीति भवितव्यमितिकर्तव्यतया। सा च कृत्स्नाङ्गै[7]रेवेति सर्वाङ्गोपसंहारसमर्थस्यैव काम्ये कर्मण्यधिकारः। नित्ये विधिर्यथाकथंचिदुपसंहृतयेतिकर्तव्यतया स्वसिद्धिमङ्गीकरोतीति सर्वाङ्गोपसंहाराशक्तस्याप्यधिकारः। अत एव श्येनाग्नीषोमीयवैषम्यमपि। 'श्येनेनाभिचरन् यजेते' त्यत्र प्रधानस्य श्येनयागस्य फलरागाधीनप्रवृत्तिगोचरत्वात्। तत्र च पुरुषार्थहिंसागोचरस्य 'न हिंस्यात्सर्वा भूतानी' ति निषेधस्यानुप्रवेशः। 'अग्नीषोमीयं पशुमालभेते' त्यत्र तु पशुयागस्य विध्यधीनप्रवृत्तिगोचरतया फलरागाधीनप्रवृत्त्यविषयत्वात्तत्र पुरुषार्थहिंसानिषेधस्य नानुप्रवेशः। एवमौपादानिकं फलकरणत्वमवलम्ब्यैव [8] नित्यकाम्यवैषम्यं श्येनाग्नीषोमीयवैषम्यं च [9] लिप्सासूत्रे सर्वशक्तिनये च निपुणतरमुपपादितम्। तेनोपादानप्रमाणगम्यमेव फलकरणत्वं यागस्य, न शाब्दमिति भावनावाक्यार्थत्ववादिमतानुसारेणापि करणत्वं न शाब्दबो[10]धार्हमिति ॥ १८–२० ॥

उक्तेन प्रकारेण करण[11]त्वस्यैवाशाब्दत्वात्तदुपपत्त्यर्थमपूर्वकल्पनावाचोयुक्तिर[12]पि रिक्तेति न युक्तिमतीत्युपसंहरति—

**तस्मान्न यागकरणभावनिर्वाहसिद्धये।**
**अपूर्वं कल्पयिष्याम इति वाक्यस्य रिक्तता ॥ २१ ॥**

इदानीमाग्नेयादिप्रतिबन्ध्याऽपूर्ववादिमतमुत्थापयति—

**तत्राग्नेयादिषड्यागप्रतिबन्धा परे स्थिताः।**
**समर्थयन्तेऽपूर्वस्य कल्पनामेव वादिनः ॥ २२ ॥**

"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते" ति श्रुतम्। तत्र "आग्नेयोऽष्टाकपालोऽमावास्यायाम्, ऐन्द्रं दध्यमावास्यायाम्, ऐन्द्रं पयोऽमावास्याया" मिति दर्शत्रयं

---

1 नियोगो या—घ. 2 ध्यत्वेनानभि—ङ. क. 3 विध्यापेक्षकब—ख. ग. 4 भिधीयते—ङ. 5 पूर्वकृतिविषयत्वेन—घ. 6 कामनाधिकारे—क. ख. 7 रेकेति—ङ. 8 नित्यकाम्यश्येना—घ. 9 वीप्सासूत्रे—ङ. 10 धावहमिति—घ. 11 त्वस्य शाब्द—घ. 12 पि न युक्तिमती—घ.

श्रुतम् । 'आग्नेयोऽष्टाकपालः, अग्नीषोमीयमेकादशकपालम्, उपांशुयाजमन्तरा यजती'ति पूर्णमासत्रयम् । तत्रोत्पत्तिवाक्यस्थलिङ्पदानि दर्शपूर्णमासाधिकारसन्निधिसमाम्नातानि परमापूर्वानुवादशङ्काकुण्ठितशक्तिकानि द्रागपूर्वान्तराणि न बोधयन्ति । किंत्वाग्नेयादीनां षण्णां यागानामसहभुवां सम्भूयोपकारसध्रीचीनानां परमापूर्वोत्पादनार्थमवान्तरव्यापारत्वेनोत्पत्त्यपूर्वाणि कल्प्यन्त इति चतुर्थे स्थितम् । तथा च यथाऽऽग्नेयादीनां परमापूर्वसाधनत्वोपपत्त्यर्थमपूर्वकल्पनमिष्टं तद्वदेव क्षणिकस्य यागस्य कालान्तरभाविस्वर्गसाधनभावोपपत्त्यर्थमपूर्वं कल्प्यमित्यपरे वादिनोऽपूर्वकल्पनमेव समर्थयन्त इत्यर्थः ॥ २२ ॥

समर्थनप्रकारमेव दर्शयति—

**यदि साधनता न स्यात्क्षणिक[1,2]त्वाविशेषतः ।**
**आग्नेयादेरपि तदा नापूर्वं प्रति सा भवेत् ॥ २३ ॥**

क्षणिकत्वेन यागस्य कालान्तरभाविफलसाधनत्वानुपपत्तावाग्नेयादीनां षण्णामपि यागानां दर्शपूर्णमा[3]साधिकारवाक्यबलादागतमपूर्वसाधनत्वमपि नोप[4]पद्यते । क्षणिकत्वाविशेषादित्यर्थः ॥ २३ ॥

अत्र राद्धान्ती स्वाभिप्रायमाविष्कुर्वन्नाशङ्कते—

**अथो[5]च्यते दर्शपूर्णमासवाक्यस्थलिङ्पदम् ।**
**कृतिसाध्यतयाऽपूर्वं यदि वाऽभिदधाति च ॥ २४ ॥**
**तत्राग्नेयादियागानां घटकत्वं कृतिं प्रति ।**
**साक्षाद्धि कृतिसाध्यत्वमभाव्यस्य न विद्यते ॥ २५ ॥**
**तदाग्नेयादियागानां साधनत्वोपपत्तये ।**
**[6] मध्ये[7]स्वव्यापारतयाऽपूर्वाणां कल्पनेष्यते ॥ २६ ॥**

"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते" त्यत्र यदेतल्लिङ्पदं तत्तावद्विषयनियोज्यसङ्घटितत्वेन कृतिसाध्यमपूर्वमभिधत्ते । तत्र सन्निधिसमाम्नातान्याग्नेयादिवाक्यानि परमापूर्वस्याभाव्यस्य साक्षात्कृतिसाध्यत्वानुपपत्तेः कृतिसाध्याग्नेयादियागसाध्यत्वमुपस्थापयन्ति । तथाऽपि यागानां परमापूर्वसाधनत्वमनुपपन्नम् । क्षणिकत्वेन सर्वेषां सहभावानुपपत्तेः प्राच्योदी[8]च्याङ्गसम्भूत्यभावाच्च । अतस्तत्साधनभावोपपत्त्यर्थं[9]मवान्तरव्यापारत्वेनोत्पत्त्यपूर्वाणि परिकल्प्यन्त इत्यर्थः ॥ २४–२६ ॥

---

1 त्वाद्यजैः परे–घ. 2 त्वान्न चेष्यते–ङ. 3 सादि वाक्य–ङ. 4 पद्येत–ग. 5 च्येत–ङ. 6 मध्यमव्यापरतया–ङ. 7 स्वव्यापृतितया–क. 8 च्यसम्भू–ग. 9 मपूर्वावान्तरत्वेन–क. ख.

ए[ तद्ध ]कग्रन्थेनाह—

[1] अतश्चोत्पत्त्यपूर्वाणां व्यापारत्वेन कल्पनात्।

तत्राग्नेयादियागानां साधनत्वं न हीयेत ॥ २७॥

यत एवमुत्पत्त्यपूर्वाणि व्यापारत्वेन परिकल्प्यन्तेऽतस्तद्द्वारा यागानामाग्नेयादीनां साधनत्वं यदि निर्वहेत्, तर्हि यागस्यापि क्षणिकत्वेन कालान्तरभाविफलसाधनत्वानुपपत्तावपूर्वकल्पनेन साधनत्वं निर्वहेदपीत्यर्थः ॥ २७ ॥

एतां प्रतिबन्दीमनूद्य दूषयति—

इत्येवं प्रतिबन्धा यत्प्रत्यवस्थानमीरितम् ।

नैतत्संगच्छतेऽपूर्वं यदि [2] कल्प्येत तर्ह्यपि ॥ २८॥

तस्यैव साधनत्वं स्याद्वृत्तिः पूर्वक्षणे यतः ।

अपूर्वकल्पने तस्यैव पूर्वक्षणवर्तित्वेन [3-4]साधनत्वापत्त्या यागस्य साधनत्वं न भवेदित्यर्थः ॥ २८ ॥

ननु पूर्वक्षणवर्तित्वमात्रेण कथमपूर्वस्यैव साधनत्वं, न यागस्येत्यत्राह—

यस्य पूर्वक्षणे वृत्तिर्नियता परिदृश्यते ॥ २९ ॥

यस्मादनन्यथासिद्धं तस्य तत्कारणं भवेत् ।

'अनन्यथासिद्धनियतपूर्वक्षणवर्ति कारणमि'ति कारणलक्षणस्योक्तत्वादपूर्वस्य तादृशलक्षणोपेतत्वात्तदेव कारणं भवेत् । न तु यागः । नियतपूर्वक्षण[5]वर्तित्वाभावादित्यर्थः ॥ २९ ॥

ननु भवन्मते वा कथमाग्नेयादीनां साधनत्वम् । उत्पत्त्यपूर्वव्यवहितत्वेन पूर्वक्षणवर्तित्वाभावादित्यत्राह –

वयं तूत्पत्त्यपूर्वाणामेव पूर्वक्षणे स्थितेः ॥ ३० ॥

नियोगसाधनत्वं च ब्रूमः किं तत्र हीयते ।

तत्रापि नियतपूर्वक्षणवर्तित्वेनोत्पत्त्यपूर्वाणामेव परमापूर्वसाधनत्वेऽपि न दोषः । अयं तु विशेषः—'नाव्यापृतं करणं भवती'ति न्यायेनाग्नेयादीनामपूर्वकरणत्वनिर्वाहाय व्यापारत्वेनोत्पत्त्यपूर्वकल्पनेऽपि "स्वाङ्गमव्यवधायक"मिति न्यायेनापूर्वाण्याग्नेयादीनां [6]करणत्वं न विरुन्धन्ति । अत्र तु यागस्य तावत् कालान्तर[7]भाविफल-

---

[1] एतच्चो—क. ख. [2] विधेत—घ. [3] साधनत्वोपपत्तेर्या—क. [4] साधनत्वोपपत्तौ—क. [5] वृत्तित्वा—ख. [6] साधनत्वं—क. [7] भावित्वं—क.

साधनत्वं क्षणिकस्यायोग्यमित्यपूर्वं स्वय[1]मागत्यापि फलसाधनतां स्वयमेव भजते। नियतपूर्वक्षणवर्तित्वात्। न तु [2] यागस्य फलसाधनतां सहते। अङ्गत्वाभावेनाव्यवधायकत्वाभावादिति भावः ॥ ३० ॥

आग्नेयादियागानां नियोगसाधनतानिर्वाहाय कल्पितानामुत्पत्त्यपूर्वाणामवगमकं किमिति विकल्पयति—

[3] अत्राधिकारवाक्या[4]त्किमुताग्नेयादिवाक्यतः ॥ ३१ ॥
बोध उत्पत्त्यपूर्वाणां न तावद्युज्येतऽग्रिमः।

अत्र श्लोके पादत्रयेण विकल्पप्रदर्शनम्। तुरीयपादेनाधिकारवाक्यादवान्तरापूर्वावाम इति प्रथमपक्षप्रतिषेधः ॥ ३१ ॥

कुतो न युज्यत इत्याशङ्क्यावगमकपदाभावादित्याह—

पदमुत्पत्त्यपूर्वाणां बोधकं न हि विद्यते ॥ ३२ ॥

नन्वनेकपदकदम्बकात्मके कथमवान्तरापू[5]र्वावगमकपदाभाव इत्याशङ्क्यार्थान्तरप्रकाशने व्यापृतस्य पदस्यार्थान्तरबोधकत्वानुपपत्तेरित्याह—

लिङ्पदं यागविषयकृतिसाध्यार्थवाचकम्।
स्वर्गकामपदं त्वत्र नियोज्यस्याभिधायकम् ॥ ३३ ॥
यद्दर्शपूर्णमासाभ्यामिति तन्नाम कर्मणः।
अतः प्रत्यायकपदाभावात्पक्षो न चादिमः ॥ ३४ ॥

यजेतेत्यत्र प्रत्ययस्य कृतिसाध्यापूर्वसमर्पकत्वे[6]न प्रकृतेश्चापूर्वकृतिविषयसमर्पकत्वेन स्वर्गकामपदस्य कृत्याश्रयतया नियोज्यसमर्पकत्वेन दर्शपूर्णमासपदस्य कर्मनामतया तृतीयाविभक्तेश्चौपादानिक [7]फलसाधनत्वानुवादकत्वादुत्पत्त्यपूर्वप्रत्यायकमधिकारवाक्ये किमपि पदं नास्तीति प्रथमपक्षो नोपपद्यत इत्यर्थः ॥ ३३-३४ ॥

द्वितीयं दूषयति—

न चाग्नेयादिवाक्यानां तत्प्रत्यायकता भवेत्।

कुत इत्यत आह—

यतोऽधिकारवाक्यस्य समाम्नातानि सन्निधौ ॥ ३५ ॥
न चाग्नेयादिवाक्यानि पृथगर्थं वदन्त्यपि।

---

1 मवगम्यापि—घ. 2 यागस्य साधनतां—क. 3 अथाधि—क. ङ. 4 त्किमाग्नेयादितिवाक्यतः—ङ. 5 र्वानवगम इ—घ. 6 न स्वर्गकामपदस्य—क. ङ. 7 फल—ङ.

परमापूर्वानुवादशङ्काकुण्ठितशक्तिकाः ॥ ३६ ॥
[1]तस्माल्लिङादयोऽपूर्वं न पृथग्बोधयन्ति हि ।

अधिकारसन्निधिपठितानामाग्नेयादिवाक्यस्थलिङादीनां परमापूर्वानुवादशङ्काकुण्ठितशक्तिकत्वेन द्रागपूर्वान्तरबोधकत्वाभावादित्यर्थः ॥ ३५–३६ ॥

यद्याग्नेयादिवाक्यस्थलिङादयोऽपूर्वाण्यवगमयन्तीत्यभिधीयते तदा सप्तमाद्यविरोधोऽपि स्यादिति युक्त्यन्तरमाह—

सप्तमाद्यविरोधोऽपि सति चैवं प्रसज्यते ॥ ३७ ॥

ननु सप्तमाद्ये किमुक्तं, कथं वा तेन विरोध इत्याशङ्क्य तत्रत्य[2]प्रमेयस्मरणपूर्वकं विरोधं [3] स्फोरयति—

तत्रान्विताभिधानार्थं ग्राहकग्रहणं स्मृतम् ।
तथाऽधिकारवाक्यस्थलिङ्पदेन समीरितम् ॥ ३८ ॥

प्रतीयते प्रकरणी नियोग इतरस्तथा ।
पदार्थजातं तस्योपसर्जनत्वेन [4] पठ्यते ॥ ३९ ॥

प्रयोजनं तथाऽपूर्वमि[5]तरत्तु [6]प्रयोजनि ।
खले कपोतवत्सर्वान् पदार्थान् स्वीयभावतः ॥ ४० ॥

गृह्णात्यादौ यथायोग्यद्वारा पश्चात्तदन्वयः ।
इत्येवं सप्तमाद्योक्तं,

सप्तमाद्य एवं चिन्तितम्—किं सर्ववेदविहिताः सर्वे क्रतुधर्माः सर्वत्र पारिप्लवा भवन्ति, किं वा प्रतिप्रकरणं व्यवतिष्ठन्त इति । तत्र यदि सर्वत्र सर्वे धर्माः पारिप्लवा भवेयुस्तर्हि सर्वेषामपि क्रतूनां व्यवस्थाऽभावेन क्रतुभेदो न स्यात् । सर्वधर्मानुष्ठानाच्चातिप्रसङ्गः स्यात् । अतोऽधिकारवाक्यैः प्रत्येकं विषयनियोज्यसंघटितापूर्वाणामवबोधनादपूर्वाणां च प्रत्येकं यागविषयकृतिसाध्यतयाऽवगतत्वाद्विषयस्य चाभिसंहितफलकरणत्वपूर्वकत्वादितिकर्तव्यतासध्रीचीनस्य करणत्वात्प्रकरणपठितैरेवाङ्गैरितिकर्तव्यताया अवगमात्प्रतिप्रकरणं धर्मा व्यवतिष्ठन्त इति । तत्र च स्वाधिकारवाक्यगतलिङ्पदेन प्रतीयमानमपूर्वं प्रकरणित्वेन प्रधानतया प्रतीयते । [7] तच्च प्रकरणग्राहकं, विनियोजकं, प्रयोजकं चेति त्रिविधम् । तत्र प्रकरणपठितान् पदार्थान् स्वीयभावेन गृह्णद्ग्राहकं, द्वारकार्यं विनियुञ्जानं विनियोजकं, अनुष्ठापयत्प्रयोजकमित्येवमधिकारविधेरेव ग्राहकत्वं

---

1 तथा लिङादयो—क. ङ. 2 प्रक्रियास्मरणपूर्वकं विरोधं—क. ङ. 3 स्थापयति—ङ.
4 पद्यते—क. ख. 5 तरस्तु—ग. 6 प्रयोजने—क. 7 ततश्च—घ.

विनियोजकत्वं प्रयोजकत्वं चेत्युक्तम्। तत्र चादौ सर्वेषामपि पदार्थानां प्रातिपदिक- मात्राभिहितानाम[1]पूर्वीयत्वेनैवान्वयः। तदेव चान्विताभिधानं ग्राहकग्रहणमिति चोच्यते। तत्र चाधिकारविधेः प्राधान्येन प्रयोजनत्वम्। इतरपदार्थजातस्य तूपसर्जनत्वेना- पूर्वीयत्वात्प्रयोजनित्वम्। स एव प्रयोजनप्रयोजनिभावः। अनेन चान्वयेन खले कपोतन्याय उदाह्रियते—यथा हि गगने समुत्पतन् कपोतः खलेऽवशिष्टान् गृह्णन् स्वीयत्वेनाभिमन्यमानः खले निपतति, तद्वदपूर्वमपि प्रकरणपठितान् पदार्थान् स्वीय- त्वेन गृह्णातीत्यादौ तिरस्कृतविभक्तिकप्रातिपदिकार्थानामेवान्वयः। पश्चात्तु विभक्ति- पर्यालोचनया यथायोग्यद्वारा कार्यान्वय इत्येवं सप्तमाद्येऽभिहितमिति भावः ॥३८—४०॥

नन्वेवमस्तु नाम ग्राहकग्रहणापरनामधेयमन्विताभिधानं सप्तमाद्योक्तम्। कथमत्राऽऽग्नेयादिगतलिङ्गादिभिरपूर्वान्तरबोधने तद्विरोध इत्याशङ्क्याह—

तथा सति लिङ्गादिभिः ॥ ४१ ॥

यद्याग्नेयादिवाक्य[2]स्थैरपूर्वान्तरमुच्यते।
तर्हि प्रयाजवाक्यैरप्यपूर्वान्तरबोधने ॥ ४२ ॥
प्रधानानां तदङ्गाङ्गिभावो न स्यात्परस्परम्।

अधिकारसन्निधिसमाम्नातानामाग्नेयादिवाक्यानां परमापूर्वानु[3-4]वादशङ्काकुण्ठित- शक्तीनामपूर्वान्तरबोधकत्वे प्रयाजादिवाक्यानामप्य[5]पूर्वान्तरबोधकत्वेन सर्वेषामप्य- पूर्वानुबन्धकर्मणां प्राधान्ये प्रधानानां परस्परमङ्गाङ्गिभावाभावेन प्रयोजनप्रयोजनि- भावा[6]न्वयविरोधो भवेदिति भावः ॥ ४१—४२ ॥

तदेतदनुवादपुरस्सरं प्रतिक्षिपति—

विरुध्यते तदा सप्तमाद्योक्तमिति चेन्न तत् ॥ ४३ ॥

पूर्वोक्तमनूद्य दूषयति—

उत्पत्त्यपूर्वगमकं नास्तीत्यभिहितं तु यत्।
असङ्गतं तदाग्नेयादिवाक्यात्तत्प्रतीतितः ॥ ४४ ॥

ननूक्तमाग्नेयादिवाक्यानामपूर्वान्तरबोधकत्वे सप्तमाद्यविरोध इति तदपि नास्तीत्याह—

सप्तमाद्यविरोधोऽपि सत्येवं न प्रसज्यते।

---

1 पूर्वेण यदन्वयः—घ. 2 स्थमपू—क. ङ. 3वादनकुकुण्ठित—क. 4 वादकुण्ठित—ङ. 5 पूर्वानुबन्धकत्वेन—क. 6 न्वयो न विरोधी भवतीति—क. ख. ङ.

कुत इत्यत्राह—

**यद्यपि प्राग्लिङादीनां शङ्काकुण्ठितशक्तिता ॥ ४५ ॥**
**पश्चादेवोत्पत्त्यपूर्ववाचकत्वं तु कल्प्यते ।**
**क्षणिकानां तु यागानां सह साधनता न हि ॥ ४६ ॥**
**प्राच्योदीच्याङ्गसम्भूतेरपि सत्ता न विद्यते ।**
**अत उत्पत्त्यपूर्वाणि कल्प्यन्ते साधनानि च ॥ ४७ ॥**
**नियोगं प्रति तान्येव भवन्तीति न दुष्यति ।**

प्रथमं तावदाग्नेयादिवाक्यगतलिङादीनां परमापूर्वानुवादशङ्काकुण्ठितशक्तिकत्वेनापूर्वान्तरबोधकत्वाभावेऽप्याग्नेयादीनां षण्णामपि यागानां क्षणिकत्वेन सह साधनभावानुपपत्तेः प्राच्योदीच्याङ्गसम्भूत्यभावाच्च कल्पितान्यवान्तरापूर्वाणि प्रति वाचकत्वं पश्चादेवात्र परिकल्प्यते । एवं सति परमापूर्वसाधनत्वमाग्नेयादिजन्योत्पत्त्यपूर्वाणामेव भविष्यतीति न सप्तमाद्यविरोध इत्यर्थः ॥ ४५–४७ ॥

नन्वेवं क्षणिकाया यागक्रियायाः कालान्तरभाविफलसाधनभावोपपत्त्यर्थमपूर्वकल्पनं स्यादित्यत्राह—

**न चाग्नेयादिषड्यागक्रियातोऽपूर्वकल्पनम् ॥ ४८ ॥**
**अपूर्वस्यैव तर्हि स्यात्साधनत्वं यजेर्न हि ।**

कल्पितस्यैवापूर्वस्य नियतपूर्वक्षणवर्तित्वेन साधनताऽऽपत्त्या यागस्य [1]तदभावेन साधनत्वाभावादित्यर्थः ॥ ४८ ॥

एवमाग्नेयादिप्रतिबन्दीं निराकृत्य निगमयति—

**प्रतिबन्दी ततश्चैषा साम्याभावान्न युज्यते ॥ ४९ ॥**
**अतोऽत्र कल्पनाऽपूर्वस्योपपत्तिमती न हि ।**

साम्ये सति प्रतिबन्दी जायते । अत्र तूत्पत्त्यपूर्वाणामेवानन्यथासिद्धनियतपूर्वक्षणवर्तित्वेन [2]साधनत्वम् । अव्यवधानात् । तद्वत्परमापूर्वस्य साधनतया कल्पने यागस्य तद्व्यवधानान्न साधनत्वमिति साम्याभावान्न प्रतिबन्दी युज्यत इत्यर्थः ॥ ४९ ॥

अत्र लब्धावकाशश्चोदयति—

**ननु साधनता यागस्यादौ यदि न विद्यते ॥ ५० ॥**
**करणत्वं कथं तस्य पश्चाद्वा भवतीति चेत् ।**

---

[1] तथात्वाभावेन—घ. [2] साधनत्वाभिधानात् ।—क. ङ.

पूर्वं यागस्य कालान्तरभाविफलं प्रति साधनत्वाभावे कथं तर्हि [1]करणीभूतस्य यागस्य विषयत्वेनान्वयप्रतिपादनमिति साधनत्वकरणत्वयोरभेदं प्रतिपद्यमानस्यैतच्चोद्यमिति भावः ॥ ५० ॥

तदेतत्परिहरति—

उच्यते करणत्वं हि साधन[2]त्वाद्धिभिद्यते ॥ ५१ ॥

करणत्वसाधनत्वयोः परस्परं भिन्नत्वात्साधनत्वाभावेऽपि करणत्वं विद्यत इति न चैतच्चोद्यमवतरतीत्यर्थः ॥ ५१ ॥

कुतो भेद इत्यत्राह—

तत्स्वरूपपरामर्शात्तथा हि श्रूयतामिदम् ।
[3]कारकत्वेन सङ्ख्यातं यत्कर्तृकरणादिकम् ॥ ५२ ॥
[4]तत्क्रियाद्वारकतया सा च षण्णां हि विद्यते ।

न करणत्वं [5] साधनत्वावान्तररूपम् । तत्तु क्रियाद्वारकम् । 'क्रियां कुर्वद्धि कारक' मिति तल्लक्षणात् । साधनत्वं तु कारणत्वावान्तरभेदात्मकम् । तच्चानन्यथासिद्धनियतपूर्वक्षणवर्तित्व[6]मित्यनयोर्भेदः । क्रियाद्वार[7]कता च षण्णामपि कारकाणां विद्यत इत्यर्थः ॥५२

इदानीं षट्स्वपि कारकेषु क्रमेण क्रियाद्वारकतां दर्शयितुं वैदिकान्येवोदाहरणान्युपादत्ते—

स्नाति तीर्थे इति तथा क्रियाद्वारा हि कर्तृता ॥ ५३ ॥
व्रीहीणामपि कर्मत्वमवहन्तिक्रियाकृतम् ।
उद्धन्तिक्रियया स्फ्यस्य करणत्वमपि स्थितम् ॥ ५४ ॥
सम्प्रदानत्वमात्रेयो भजते स्वर्णदानतः ।
अपादानत्वमग्नेश्च तृणापचयनागतम् ॥ ५५ ॥
तथा चाहवनीयादौ होमादाधारता स्थिता ।

"तीर्थे स्नाती "त्यत्र यजमानस्य [8]यत्स्वातन्त्र्यरूपकर्तृत्वं तत्स्नानक्रियाद्वारा। तथा "व्रीहीनवहन्ती " त्यत्र यत्कर्तृक्रियये प्सिततमत्वरूपं कर्मत्वं तच्चावहननक्रियाद्वारकमेव । तथा "स्फ्येनोद्धन्ती " त्यत्र स्फ्यस्य यत्साधकतमत्वं क्रियाप्रसिद्धौ प्रकृष्टोपकारकत्व-

---

1 कारणभूतस्य—क. ङ. 2 त्वाद्धि भिद्यते—क. ङ. 3 कारणत्वेन—क. ङ. 4 यत्क्रि—घ 5 कारणत्वावान्तरभेदरूपम्—घ. 6 मित्येवमन—घ. 7 कः स च—घ. 8 यत्स्नानकर्तृत्वं—क. ङ.

रूपं करणत्वं तदप्युद्धननक्रियाद्वारकमेव। तथा "हिरण्यमात्रेयाय ददाती" त्यत्र यत्करणभूतेन कर्मणा कर्त्रभिप्रायगोचरत्वमात्रेयस्य सम्प्रदानत्वं तदपि हिरण्यदान-क्रियाद्वारकम्। तथैव "अग्नेस्तृणान्यपचिनोती" त्यत्राग्नेर्यदवधित्वरूपमपादानत्वं तदपि तृणापचयनक्रियाद्वारकम्। तथैव "आहवनीये जुहोती" त्यत्र यदाहवनीयस्य कर्तृकर्मणोरन्यतरस्य धारणक्रियां प्रत्याधारत्वरूपमधिकरणत्वं तदपि होमक्रियाद्वारकमिति षण्णामपि कारकाणां क्रियाद्वारकमेव कारकत्वमित्यर्थः ॥ ५३–५५ ॥

न चैवं साधनत्वं क्रियाद्वारकमित्याह—

[1]यस्य त्वनन्यथासिद्धा नियता प्राक्क्षणस्थितिः ॥ ५६ ॥
साधनत्वं तु तस्यास्ति न क्रियाद्वारकं तु तत्।

कार्यात्पूर्वमनन्यथासिद्धनियतस्थितिमात्रेण साधनत्वं, न क्रिया[2]द्वारकमित्यर्थः॥५६॥

एवं चात्र यागस्यापूर्वसाधनत्वाभावेऽपि फलोत्पादकक्रियाद्वारकं करणत्वं न दुष्टमित्याह—

प्राक्च यद्यपि यागस्य साधनत्वं न विद्यते ॥ ५७ ॥
तथाऽपि च क्रियाद्वारं करणत्वं न दुष्यति।

ननु साधनत्वमप्युत्पादनक्रियाद्वारकमस्तीत्याशङ्क्याऽऽकाङ्क्षानुसारेणान्वयो वक्तव्यः, न च साधनाकाङ्क्षा वा[3]क्यार्थस्येत्याह—

आदौ हि विषयत्वेन यागस्यान्वय इष्यते ॥ ५८ ॥
कृतिः किंविषयेत्यादौ कृतिरूपनिरूपणे।
आकाङ्क्षा जायते पूर्वं तदाकाङ्क्षानुसारतः ॥ ५९ ॥
सा कृतिर्यागविषयेत्येवं विषयता यजेः।
प्रकारोऽपेक्ष्यते पश्चात्कथं कृत्या हि साध्यते ॥ ६० ॥
अपूर्वमित्यपेक्षायां यागद्वारेति तद्गतिः।

कृतिसाध्यमित्युक्ते किंविषयकृतिसाध्यमिति कृतिस्वरूपनिरूपणापेक्षा प्रथमं, न तु कथमिति प्रकारापेक्षा। ज्ञाते स्वरूपे प्रकारस्यापेक्षितत्वात्। तथा च यागविषय-कृतिसाध्यमिति प्रथमं यागस्य विषयत्वेनान्वयो न साधनत्वेन, अनपेक्षितत्वात्। अनन्तरं चाभाव्यस्यापूर्वस्य कथं कृतिसाध्यत्वमित्याकाङ्क्षायां यागद्वारेति यागस्य घटकत्वं, कृतिसाध्यत्वात्। अतो न कुत्रापि साधनत्वमपेक्षितमित्यर्थः ॥ ५८–६० ॥

---

1 यत्र—ङ. 2 द्वारेत्य—क. ङ. 3 क्यस्ये—घ.

ननु करणत्वस्य वा कथमपेक्षितत्वं, अन्वयाननुप्रविष्टत्वादित्यत्राह—

ततो नियोज्यविषयघटिते बोधिते सति ॥ ६१ ॥

लिङादिभिरपूर्वे तु विमर्शोऽयं प्रजायते ।
स्वर्गकामकृतिस्तावत्स्वर्गमुद्दिश्य वर्तते ॥ ६२ ॥

सा च साधयितुं स्वर्गं साक्षाच्छक्नोति नैव हि ।
अतश्च स्वर्गकरणं यागं व्याप्नोति तत्कृतिः ॥ ६३ ॥

तत्कृतिव्याप्यता न स्यात्करणत्वं न चेत्फले ।
अतः फलकृतिव्याप्तो यागोऽयं करणं फले ॥ ६४ ॥

इत्युपादानतो यागकरणत्वं न शब्दतः ।
इति व्युत्पादितं लिप्सासूत्रे पूर्वमनीषिभिः ॥ ६५ ॥

अतो न दोषः करणभावे यागस्य विद्यते ।

सत्यम्, करणत्वमशब्दार्थतयाऽऽकाङ्क्षानुसारेणान्वयानुप्रविष्टं न भवति । अपि तु विध्याक्षेपरूपोपादानतः प्राप्तमेव । तथा च विषयनियोज्यसंघटिताकारवाक्यस्थलिङादिभिरभिहितो नियोगः स्वविषयावच्छिन्नकृत्याश्रयभूतनियोज्यकाम्यभूतस्वर्गार्थप्रवृत्तकृतिव्याप्यत्वरूपं करणत्वं च नानुपपन्नमित्यर्थः ॥ ६१—६५ ॥

एवमियता प्रबन्धेन प्रतिपादितमर्थं निष्कृष्य दर्शयति—

अतो नियोज्यसमभिव्याहारेण लिङादिभिः ॥ ६६ ॥

वैदिकैरुच्यतेऽपूर्वं स्थायिकार्यमिति स्थितम् ।

स्थायिकार्यस्यैवात्र लिङाद्यभिधेयत्वेनाङ्गीकारे लाघवमप्यस्तीत्याह—

इत्थं कार्यान्वयो लोकवेदयोः सम इष्यते ॥ ६७ ॥

यदि लोकवेदयोरेकमेव कार्यं, कथं तर्हि वैदिककार्यस्य मानान्तरामेयत्वमित्यत्राह—

अस्य तु स्थायितामात्रं वेदादित्यत्र शालिका ।

मानान्तरामेयत्वं चेति शेषः ॥

तामेव शालिकामुदाहरति—

व्युत्पत्तिरपि कार्यार्थे व्यवहारानुसारिणी ॥ ६८ ॥

किन्तु निर्धारणामात्रं वेदवाक्यविमर्शजम् ।

अयमत्र शालिकार्थः—लिङादीनां कृतिसाध्यरूप[1]कार्यार्थे व्युत्पत्तिर्वृद्धव्यवहारानुसारेणैव । तत्तु कार्यं प्रमाणान्तरागोचरं स्थायि चेति वेदवाक्यविमर्शादेव जायते । स्वर्गकामपदस्य नियोज्यत्वेनाभिधानादिति ॥ ६८ ॥

एवमुक्तरीत्या [2]कार्यान्वय[3]स्यादुष्टत्वाल्लोकाभिमतवृद्धव्यवहारानुसारित्वाल्लो्क-वेदाधिकरणानुग्रहाच्चावश्यं कार्यमेव लिङाद्यभिधेयतयाऽङ्गीकर्तव्यमित्युपसंहरति—

[4]तस्मात्कार्यान्वये दोषकला नैवास्ति काचन ॥ ६९ ॥

इति प्रवर्तकं लोकानुसारात्कार्यमिष्यताम् ।
ततश्च लोकवेदाधिकरणं चार्थवद्भवेत् ॥ ७० ॥

यद्यप्यपूर्वस्य कल्प्यत्वनिराकरणमेवैतत्परिच्छेदार्थः, तथाऽपि तत्प्रसङ्गादेवान्यदपि किंचित्प्रकृतोपयोगितया प्रतिपादितमिति मन्तव्यम् ॥ ६९–७० ॥

अथेदानीं सर्वेषामपि सिद्धब्रह्मपरत्वं प्रतिपादयतां वेदान्तिनां मतमुत्थापयति—

तत्र वेदान्तवाक्यानां सिद्धे ब्रह्मणि मानताम् ।
इच्छन्त औपनिषदा लौकिकीं सिद्धसङ्गतिम् ॥ ७१ ॥
"पुत्रस्ते जात" इत्यादौ वदन्ति परिशेषतः ।

ते हि मन्यन्ते—यदि लोके वृद्धव्यवहारवशाद्व्युत्पित्सोः कार्य एव व्युत्पत्तिः, तदा वैदिकवाक्यानामपि यया कयाचन रीत्या कार्यपरतैव स्यात्, न चैवं, किन्तु लोके व्युत्पित्सोः 'पुत्रस्ते जात' इत्यादौ पुत्रजन्मनि सिद्धेऽपि सङ्गतिग्रहोऽस्ति । अतस्तद्बलाद्वेदान्तवाक्यानां सिद्धब्रह्मपरत्वं नानुपपन्नमिति भावः ॥ ७१ ॥

कुत्र तर्हि 'पुत्रस्ते जात' इति वाक्यं, येन लोके व्युत्पित्सोः सिद्धेऽपि सङ्गतिग्रह इत्याशङ्क्य व्युत्पादयितुं स्थलशुद्धिं तावदाह—

क्वचिद्देशे सुतोत्पत्तौ पटं सुतपदाङ्कितम् ॥ ७२ ॥
प्रेषयन्ति जना वार्ताहारेण जनकान्तिकम् ।
व्युत्पित्सोस्तत्र सिद्धेऽपि व्युत्पत्तिरिति ते जगुः ॥ ७३ ॥

कस्मिंश्चिद्देशे पुत्रजननसमनन्तरं अलक्तकादिना पुत्रपदाङ्कितं पटं तत्पित्रे कुमारजननसूचनार्थं केन चिद्वार्ता[5]हारेण श्वशुरादयः प्रेषयन्ति । स च वार्ता[6]हारस्तं पटं

[1] वाक्यार्थे—ग. [2] वाक्यान्व—ख. ग. [3] स्य दु?—ग. [4] साक्षात्का—ङ. [5] हरेण. [6] हरः—ग.

गृहीत्वा जनकाभ्याशं प्राप्य प्रातरस्मै पुत्रपदाङ्कितं पटं प्रदर्श्य 'दिष्टया वर्धसे! पुत्रस्ते जात' इति वदति। तत्र वार्ताहारेण सहैवागतस्य व्युत्पित्सोस्तत्र सिद्धेऽपि व्युत्पत्तिं वदन्तीत्यर्थः ॥ ७२–७३ ॥

एवंविधार्थद्योतकं पूर्वाचार्यवचनमुदाहरति—

दृष्टचैत्रसुतोत्पत्तेस्तत्पदाङ्कितवाससा।
वार्ताहारेण यातस्य परिशेषाद्विनिश्चितिः ॥ ७४ ॥

दृष्टा चैत्रसुतोत्पत्तिर्येन सः दृष्टचैत्रसुतोत्पत्तिः। उत्पन्नं चैत्रसुतं दृष्टवानित्यर्थः। तादृशव्युत्पित्सोः परिशेषप्रमाणेन सिद्धे सङ्गतिग्रहनिश्चयादित्यन्वयः। चैत्रसुतोत्पत्तिदर्शनमात्रेण कथं वाक्यस्य कुमारजननार्थत्वनिश्चय इत्यत्राह—[1] **वार्ताहरेण यातस्येति**। व्युत्पित्सोरिति शेषः। ननु वार्ताहारेण सहागमनमात्रे कथं तदर्थत्वनिश्चयः, वार्ताहारोऽन्यद्वा कथयतीति सन्देहस्य विद्यमानत्वादित्यत्राह—**तत्पदाङ्कितवाससेति** तस्य पुत्रस्य पदेन अङ्कितं वासो यस्य तेन। पुत्रपदाङ्कितपटं प्रदर्श्य निमित्तान्तरकथनस्यायुक्तत्वादप्रसक्तत्वाच्चेत्यर्थः ॥ ७४ ॥

तामेव शालिकां तात्पर्यकथनेन विवृणोति—

तथा हि स्वामिने वार्ताहारः पुत्रपदाङ्कितम्।
पटं प्रदर्श्य वदति पुत्रस्ते जात इ[2]त्यपि ॥ ७५ ॥

पटप्रदर्शनेन विदितमेवार्थं पुत्रस्ते जात इति वाक्येन वदतीत्यर्थः ॥ ७५ ॥

ननु कथं व्युत्पित्सोः सिद्धे सङ्गतिग्रहः। उत्तमवृद्धवाक्याभावात्तत्समनन्तरभाविमध्यमवृद्धप्रवृत्तेश्च दर्शनादित्यत्राह—

व्युत्पित्सुरपि तत्पुत्रजन्म दृष्ट्वा समागतः।
तादृग्वाक्यं समाकर्ण्य विकसद्वदनं नरम् ॥ ७६ ॥
विलोक्य हर्षमप्यस्य विकासान्निश्चिनोति सः।

यद्यप्युत्तमवृद्धवाक्यान्मध्यमवृद्धप्रवृत्तिर्नास्ति, तथाऽपि तत्स्थानीयवार्ताहारवाक्यश्रवणाच्चैत्रमुखप्रसादो विद्यते। तेन मुखप्रसादलिङ्गेन चैत्रस्य हर्षोऽनुमीयते 'अयं चैत्रो हर्षवान् भवितुमर्हति, प्रसन्नवदनत्वान्मद्वदित्यर्थः ॥ ७६ ॥

ननु मुखप्रसादलिङ्गेन हर्षमात्रानुमानेऽपि कथं हर्षस्य तदेकनिमित्तत्वनिश्चय इत्यत्राह—

तन्निमित्तान्तराभावे वाक्यश्रुत्यनुगामिनम् ॥ ७७ ॥

---

[1] वार्ताहरेण यातस्येति। सहेति शेषः—घ. [2] त्यसौ—ङ.

हर्षं वाक्यार्थविज्ञानजनितं निश्चिनोत्यपि ।

परिदृश्यमाननिमित्तान्तराभावाद्वाक्यश्रवणसमनन्तरभाविनो हर्षस्य वाक्यार्थजनितत्वमनुमीयते । अयं च हर्षो वार्ताहारवाक्यश्रवणसमनन्तरभाविवाक्यार्थज्ञानजनितो भवितुमर्हति, असति निमित्तान्तरे वाक्यश्रवणसमनन्तरभावित्वात्, यदनन्तरं यद्दृश्यते तत्तस्य कारणं, यथा तन्तुसमनन्तरभाविनः पटस्य तन्तव इत्यर्थः ॥ ७७ ॥

भवतु नामैवं वाक्यश्रवणसमनन्तरभाविनो हर्षस्य वाक्यार्थज्ञानजनितत्वनिश्चयः, स तु वाक्यार्थः पुत्रजन्मेति निश्चयः कथमित्यत्राह—

प्रियत्वेन च तत्पुत्रजन्मनो निश्चयो भवेत् ॥ ७८ ॥

व्युत्पित्सुरपि पूर्वं पुत्रजन्मनो दृष्टत्वात् तत्पदाङ्कितपटप्रदर्शनाच्च लोके हर्षस्य प्रियश्रवणजनितत्वेन च दृष्टत्वाच्च पुत्रजन्मनश्च लोके सकलजनसाधारणतया प्रियत्वेनावगमाच्च पुत्रजन्मैव वाक्यार्थ इति निश्चिनोति, न तु सुखप्रसवादिकम्, "पुत्रोत्पत्तिविपत्तिभ्यां नापरं सुखदुःखयो" रिति वचनादिति भावः ॥ ७८ ॥

नन्वेवं पुत्रजन्मनः सामान्येन वाक्यार्थतया निर्णयेऽपि प्रतिपदमर्थनिर्णयः कथमित्यत्राह—

प्रतिशब्दमथावापोद्धाराभ्यामर्थनिर्णयः ।

एवं परिशेषप्रमाणेन पुत्रजन्मनो वाक्यार्थतयाऽवधारणे सति समनन्तरं 'पुत्रस्ते निरामयस्तिष्ठति' 'पुत्रस्ते देशान्तरादागत' इति वाक्यान्तरादावापोद्धाराभ्यां प्रतिपदमर्थनिर्णय इत्यर्थः ॥

ननु प्रथमव्युत्पत्तेर्लोके कार्यपरत्वमुक्तमित्यत्राह—

तस्मात्प्राथमिकी सिद्धे व्युत्पत्तिर्लोक इष्यते ॥ ७९ ॥

सिद्धेऽपि प्राथमिकी व्युत्पत्तिरिष्यत इत्यर्थः ॥ ७९ ॥

एवं प्रतिपादने फलमाह—

अतो वेदान्तवाक्यानां सिद्धे ब्रह्मणि मानता ।

सिद्धे सङ्गतिग्रहस्य लोकतोऽवगत्या वेदान्तवाक्यानां सिद्धब्रह्मपरत्वं निरङ्कुशतया सिद्धमित्यर्थः ॥

एतन्मतोपसंहारपुरस्सरं तत्र राद्धान्तमाह—

इति वेदान्तिनः प्राहुस्तदेतन्नोपपद्यते ॥ ८० ॥

तत्र हेतुमाह—

**यतः प्राथमिकी कार्ये व्युत्पत्तिर्लौकिकी स्थिता ।**

आद्यव्युत्पत्तेः कार्यपरत्वेन सोपपत्तिकं प्रतिपादितत्वात्सर्वत्र कार्यपरत्वमेवाङ्गीकर्तव्यमित्यर्थः ॥

ननु 'पुत्रस्ते जात' इति वाक्ये कार्याभिधायकं पदं न प्रतीयते । अतस्तस्य वाक्यस्य कार्यपरत्वं कथमित्यत्राह—

**पुत्रस्ते जात इत्यत्र पदं कार्याभिधायकम् ॥ ८१ ॥**
**न यद्यपि तथाऽप्यध्याहारात्तेनान्वयो मतः ।**

सत्यम्, तथाविधं पदं नास्ति । तथाऽपि तेन विना वाक्यार्थस्यापर्यवसानात्तादृशं पदमध्याहरणीयमित्यर्थः ॥ ८१ ॥

नन्वध्याहारो न प्रामाणिक इत्याशङ्क्य लोकसिद्धत्वान्नैवमित्याह—

**लोकेऽपि द्वारमित्यादावध्याहारोऽपि दृश्यते ॥ ८२ ॥**

द्वारस्य संवरणे विवरणे वा चिकीर्षिते द्वारमित्येतावन्मात्रोक्तौ संव्रियतां, विव्रियतामिति वा पदमध्याहृत्य तेनान्वयदर्शनात्पदाध्याहारोऽर्थाध्याहारो वा लोकत एव सिद्ध इत्यर्थः ॥ ८२ ॥

कथं पुत्रस्ते जात इत्यत्र कार्याभिधायकपदस्य वा कर्तव्यरूपस्यार्थस्य वाऽध्याहार इत्यत्राह—

**तं पश्य तं गृहाणेति वाऽध्याहारोऽत्र चेष्यताम् ।**

पुत्रस्ते जात इत्यत्रापि तं पश्य, तं गृहाणेति पदस्य दर्शनग्रहणरूपस्यार्थस्य वाध्याहारेण तेनान्वयो भवतीत्यर्थः ॥

ननु लोकेऽप्यध्याहारादिना सिद्धपराणामपि वाक्यानां किमिति कार्यपरत्वमेव वर्ण्यते, केषाञ्चिद्वाक्यानां सिद्धपरत्वे को दोष इत्यत्राह—

**स च तादृग्विधामेव प्रतीतिमनुमापयन् ॥ ८३ ॥**
**व्यवहारो विशिष्टार्थविषयः परिदृश्यते ।**
**व्युत्पत्तावादिमार्गस्सन् विशिष्टार्थाभिधायिताम् ॥ ८४ ॥**
**कल्पयत्येव शब्दस्येत्येवं कार्यान्वयो मतः ।**

लोके तावद्वृद्धव्यवहारो व्युत्पत्तावादिमार्ग इति वक्तव्यः, स च गवानयनादिकार्यविषय एव परिदृश्यमानः सर्वत्रापि शब्दस्य कार्यपरतामापादयतीत्येवमध्याहारादिनाऽपि कार्यान्वय एवावश्यमङ्गीकरणीय इत्यर्थः ॥ ८३—८४ ॥

ननु यदि लौकिकवाक्यानामवश्यं कार्यपरता तर्हि सिद्धब्रह्मपराणां वेदान्तवाक्यानां का गतिः । अथ तान्यपि ज्योतिष्टोमादिविध्यानीतकर्तृपरतया वर्ण्यन्त इति । तन्न । भिन्नप्रकरणस्थानां वेदान्तवाक्यानां कर्मविध्येकवाक्यतानुपपत्तेरित्याशङ्क्य तर्ह्युपासनावाक्यशेषतया वेदान्तवाक्यानां गतिर्वर्णनीयेत्याह—

**यच्चाभ्यधायि वेदान्तास्सिद्धब्रह्मपरा इति ॥ ८५ ॥**
**तत्राप्युपासनावाक्यशेषत्वे किन्नु हीयते ।**

ननूपासनाया विधेयत्वं नास्ति; तत्सामग्र्यभावादित्याशङ्कते—

**[1] कर्तुमेकमकर्तुं वा चान्यथा कर्तुमेव वा ॥ ८६ ॥**
**यच्छक्यते विधेयं [2] तन्न तथोपासनेति चेत् ।**

यदि विधानसामग्रीराहित्यादुपासनाया विधेयत्वं नास्ति तदानीं [3] 'श्रोतव्यः' इत्यत्र विधिसामग्र्या विद्यमानतया श्रवणक्रियाविधेयत्वं युज्यत इत्याह—

**तर्हि श्रोतव्य इत्यत्र विधेया श्रवणाक्रिया ॥ ८७ ॥**
**तव्यप्रत्ययतः कार्यं कृतिसाध्यं प्रतीयते ।**

'श्रोतव्य' इति तव्यप्रत्ययेन कृतिसाध्यतयाऽभिहितस्य नियोगस्य कृतिं प्रति प्रकृत्यर्थभूता श्रवणक्रिया विषयतयाऽन्वेतीत्यर्थः ॥ ८७ ॥

नन्वत्र नियोज्यो वक्तव्यः । तमन्तरेण कार्यप्रतीतेरभावात् । तदुक्तम्—"न ह्यविषयान्निर्नियोज्यान्नियोगज्ञानमुत्पद्यत" इति । अतो विषयनियोज्ययोर्विधिप्रतीतौ तुल्यवत्सामग्रीत्वाद्विषयप्रतीतावपि नियोज्यप्रतीत्याऽवश्यं भवितव्यमित्यत्राह—

**नियोज्यत्वं च भवति ब्रह्मीभवनमिच्छतः ॥ ८८ ॥**

"ब्रह्म वेद ब्रह्मैव भवती"त्यत्र ब्रह्मवेदनस्य फलं ब्रह्मीभवनमर्थवादतोऽवगम्यते । तेन रात्रिसत्रन्यायेनाऽऽर्थवादिकब्रह्मीभावफलकामस्यात्र नियोज्यत्वमित्यर्थः ॥ ८८ ॥

नन्वेवं 'श्रोतव्य' इति वाक्यस्य कार्याभिधायकतव्यप्रत्ययबलात्कार्यपरत्वमस्तु, इतरेषां वेदान्तवाक्यानां का गतिरित्यत्राह—

**अतस्तत्कार्यशेषत्वं वेदान्तानां च युज्यताम् ।**

'श्रोतव्य' इत्यादिवाक्यस्य सिद्धे कार्यपरत्वे तदन्वितस्वार्थाभिधायकत्वेन तदेकवाक्यताऽऽपन्नानामितरेषामपि वेदान्तवाक्यानां कार्यपरत्वमेवेत्यर्थः ॥

---

1 अथ कर्तुमकर्तुं वा—घ. 2 तन्नाथवोपा—घ. 3 श्रोतव्यविधिसामग्र्या—घ.

नन्वेवमुक्तरीत्या यदि लौकिकानां वैदिकानां च वाक्यानां कर्यपरत्वमेव तर्हि 'देवदत्तः काष्ठैः स्थाल्यामोदनं पचति' 'इह प्रभिन्नकमलोदरे मधूनि मधुकरः पिबती 'त्यादिषु वर्तमानापदेशेषु प्रसिद्धार्थपदसमभिव्याहारबलात्कथं सिद्धे व्युत्पत्तिरित्यत्राह—

**एवं कार्यपरा यस्मादाद्या व्युत्पत्तिरिष्यते ॥ ८९ ॥**
**ततस्सिद्धपदान्यत्र चेद्द्वितीयादि का हि सा ।**

सत्यम्, कार्य एव प्रथमं व्युत्पत्तिः । सिद्धपरेषु वाक्येषु द्वितीया व्युत्पत्तिर्भविष्यतीति न दोषः । यद्वा तत्राध्याहारादिना व्युत्पत्तिसिद्धकार्यपरत्वमेव वर्णनीयमित्यर्थः ॥ ८९ ॥

प्रतिपादितं प्रमेयमुपसंहरति—

**तस्माल्लोकानुसारेण वेदे कार्यं प्रवर्तकम् ॥ ९० ॥**
**इत्यपूर्वाभिधायित्वं लिङादीनामपि स्थितम् ।**

व्युत्पत्त्यनुसारेण शब्दार्थवर्णनं कार्यम् । व्युत्पत्तिश्च लोके कार्य एवेति वैदिकलिङादीनामपि स्थायिरूपापूर्वकार्याभिधायकत्वं सिद्धमित्यर्थः ॥ ९० ॥

एवं परिच्छेदत्रितयप्रतिपादितमुपसंहरति—

**एवमर्थो यजेतेति पदस्यात्र निरूपितः । ९१ ॥**

इत्थमियता प्रबन्धेन प्रतिज्ञाते वाक्यार्थनिरूपणे यागविषयकृतिसाध्यस्यापूर्वस्य लिङादिपदवाच्यत्वेन निरूपणाद्यजेतेति लिङ्पदार्थो निरूपित इत्यर्थः ॥ ९१ ॥

इत्यहोबलदेवविरचितायां वाक्यार्थरत्नतात्पर्यप्रकाशिकायां सुवर्णमुद्रिकायामपूर्वस्य कल्प्यत्वनिराकरणेन लिङाद्यभिधेयत्वसमर्थनं नाम

तृतीयः परिच्छेदः ॥

---

# चतुर्थः परिच्छेदः

नियोज्या यन्नियोगेन वसिष्ठसनकादयः ।
तं वयं दक्षिणामूर्तिं रघुनाथमुपास्महे ॥ १ ॥

अथेदानीं स्वर्गकामपदस्य कर्तृपरत्वेन नियोज्यपरत्वाभावात्तत्समभिव्याहारबलायातमपूर्वाख्यस्थायिकार्यस्य लिङाद्यभिधेयत्वमनुपपन्नमिति तृतीयां विप्रतिपत्तिं निराकर्तुं चतुर्थपरिच्छेद आरभ्यते । तत्र सर्वेषामधिकारवाक्यानां नियोज्यसापेक्षतयाऽपूर्वबोधकत्वमसहमानः तत्सिद्धिमाक्षिपति—

ननु सर्वं नियोज्यत्वे स्वर्गकामस्य सिध्यति ।
स्वर्गकामपदं त्वे[1]तन्न नियोज्याभिधायकम् ॥ २॥

सर्वमिति पूर्वं परिच्छेदत्रयनिरूपितं लिङादीनां स्थाय्यपूर्वाभिधायकत्वं, फलं प्रति करणत्वेनाभिसंहितस्य यागस्य विषयत्वमित्येवमादिकं परामृश्यते । तद्धि सर्वं स्वर्गकामपदसमभिव्याहारबलादेवोक्तम् । साध्यस्वर्गविशिष्टो नियोज्यः स्वकाम्यसाधनं [2]कार्यत्वेनावैति । तच्च देशकालान्तरभावीति क्षणभङ्गिनीं क्रियां अयोग्यत्वात्परित्यज्य स्थायिकार्यमेव कार्यत्वेनावैतीति लिङादयः स्थायिकार्यमेवाभिदधतीति स्थापितम् । तत्सर्वं नियोज्यसापेक्षम् । अतस्तस्य नियोज्यस्य यदि सिद्धिः स्यात्तदा सर्वमपि सिध्यति । स तु नियोज्य एव न सिध्यति । स्वर्गकामपदस्य नियोज्याभिधायकत्वाभावादित्यर्थः ॥ २ ॥

ननु यदीदं स्वर्गकामपदं नियोज्यं नाभिधत्ते, कस्य तर्ह्यभिधायकमित्यत्राह—

धात्वर्थस्य हि भावार्थनये साध्यत्वमीरितम् ।
तथा च यत्र समभिव्याहारः सिद्धसाध्ययोः ॥ ३ ॥
तत्र साध्यानुगुण्येन सिद्धस्यान्वय इष्यते ।

अविरुद्धेन हि पदार्थानामन्वयेन भवितव्यम् । तथा च भावार्थाधिकरणे (पू. मी. अ. २ पा. १ अधि. १) धात्वर्थस्य साध्यत्वाभिधानात्सिद्धसाध्यसमभिव्याहारे "सिद्धं [3]साध्यायोपदिश्यत" इति न्यायेन धात्वर्थस्य साध्यत्वेनाभिधानात्स्वर्गकामपदार्थस्यापि तदानुगुण्येनान्वयो भवतीत्यर्थः ॥ ३ ॥

---

[1] तन्निर्नियो—छ. [2] काम्यत्वेन—ग. [3] साध्यातयो—ङ.

तर्हि केन प्रकारेण तदानुगुण्यं स्यादित्यत्राह—

**ततश्च कर्तृपरता स्वर्गकामपदस्य तु ॥ ४ ॥**

**न नियोज्याभिधायित्वं,**

स्वर्गकामपदस्य [1] कर्तृपरत्वेन साध्यभूतधात्वर्थान्वये भवत्यानुगुण्यं, न नियोज्यत्वेनेति स्वर्गकामपदं कर्तृपरं, न नियोज्यपरमित्यर्थः ॥ ४ ॥

ननु स्वर्गकामपदस्य कर्तृत्वेनान्वये स्वर्गस्य कथमन्वय इत्यत्राह—

**तदा स्वर्गो विशेषणम् ।**

**कामनाया भवन् गच्छत्युपसर्जनतामपि ॥ ५ ॥**

कर्तृगतकामनाविशेषणत्वेन स्वर्गस्योपसर्जनतयाऽन्वय इत्यर्थः ॥ ५ ॥

कामनाकर्मत्वेन साध्यतया प्रधानभूतस्य स्वर्गस्योपसर्जनत्वमयुक्तमित्याशङ्कते—

**अथ काम्यतया स्वर्गः पुरुषार्थो भवन् कथम् ।**

**उपसर्जनतां गच्छेत्,**

स्वर्गस्य कामनाकर्मत्वमेवोपसर्जनतामापादयतीति समाधत्ते—

**इति चेदभिधीयते ॥ ६ ॥**

**काम्यत्वादेव तस्योपसर्जनत्वं समागतम् ।**

ननु काम्यत्वादुपसर्जनत्वं स्वर्गस्य कथमित्यत्राह—

**स्वर्गकामपदस्यात्र युज्यते हि द्विधा गतिः ॥ ७ ॥**

**स्वर्गं कामयते यश्चेत्येवमिष्टा [2]कृदन्तता ।**

**[3]बहुव्रीहिस्तु यस्यास्ति कामना स्वर्ग इत्यपि ॥ ८ ॥**

अयमभिप्रायः—स्वर्गकामपदस्य तावद्द्विधैवोपपत्तिः । स्वर्गं कामयत इत्येकः पक्षः । स्वर्गे कामः कामना यस्य सः स्वर्गकाम इत्यपरः । न तु प्रकारान्तरमस्तीति ॥ ७–८ ॥

नन्वेवमस्तु स्वर्गकामपदस्योपपत्तिः, कथमुपसर्जनता स्वर्गस्येत्यत्राह—

**उपसर्जनतैवाऽस्य काम्यत्वे पक्षयोर्द्वयोः ।**

पक्षद्वयेऽपि कामनाया एव प्राधान्यात्तद्विशेषणभूतस्य स्वर्गस्योपसर्जनत्वमनिवार्यमित्यर्थः ॥

---

[1] कार्यत्वेन—ङ.  [2] कृतं तथा—क. ङ.  [3] समासस्तु—क. ङ.

एवं च स्वर्गस्य कामनाविशेषणत्वादेव स्वर्गकामपदं कर्तृवाचकमित्याह—

**अतोऽभिधत्ते कर्तारं स्वर्गकामपदं त्विदम् ॥ ९ ॥**

किं च—'यजेत स्वर्गकामः' 'आसीरन् वृद्धिकामाः' इति कर्तृसङ्ख्यानुविधानं तावदाख्यातादवगम्यते । न चेदं नियोज्यपरत्वे युज्यते । नियोज्यस्यानुपादेयत्वेन तत्सङ्ख्याया अविवक्षितत्वादित्याह—

**आख्यातात्कर्म[त्कर्तृ]सङ्ख्यानुविधानमपि दृश्यते ।**
**यथाऽऽसीरन् वृद्धिकामा यजेत स्वर्गकाम्यपि ॥ १० ॥**
**तेनापि स्वर्गकामस्य कर्तृत्वमवगम्यते ।**

अतः स्वर्गकामपदं कर्तृपरमेव । न नियोज्यपरम् । अनुपादेयगतविशेषणाविवक्षाया ग्र [हैकत्वा] हाधिकरणे निरूपितत्वादिति भावः ॥ १० ॥

ननु नियोज्यस्य नियोज्यत्वाकारेणानुपादेयत्वेऽपि तस्यैव फलसिद्धौ कर्तृत्वा-त्तत्सङ्ख्यानुविधानमेवैतत् किं न स्यादित्यत्राह—

**[1]नियोज्यस्यापि कर्तृत्वं फलसिद्धौ तु यद्यपि ॥ ११ ॥**
**तथाऽपि धातुनोपात्ते व्यापारे यस्य कर्तृता ।**
**तत्सङ्ख्यानुविधानं खल्वाख्यातेनापि युज्यते ॥ १२ ॥**

सत्यं, नियोज्यस्यापि कर्तृत्वं फलसिद्धौ विद्यते। तथाऽपि धातूपात्ते व्यापारे कर्तृत्वं [2]नास्ति । तथापि च धात्वर्थव्यापारकर्तृगतसङ्ख्यानुविधानमेवाऽऽख्यातेनोप-पद्यत इत्यर्थः ॥ ११–१२ ॥

[3]तदेतद्दृष्टान्तमुखेन द्रढयति—

**यथा हि पचतीत्युक्ते गच्छतो भाति नैकता ।**

पचतीत्यत्र यथा पाककर्तुरेवैकत्वमभिधीयते। [4-5]न गमनकर्तुः। तद्वदत्रापि यजेतेत्यत्र यागकर्तुरेवैकत्वं, न फलसिद्धिकर्तुरित्यर्थः ॥

एवमुक्तेन प्रकारेण स्वर्गकामपदस्य कर्तृपरत्वमेवोपपन्नमित्युपसंहरति—

**स्वर्गकामपदं तस्मात्कर्तुरेवाभिधायकम् ॥ १३ ॥**

अस्त्वेवं, तथाऽपि का हानिरित्यत्राह—

**न नियोज्याभिधायीति न लिङोऽपूर्ववाचिता ।**

---

1 नियोज्यस्य तु—क. ङ. 2 नास्ति, अतोऽर्थं कर्तृगत ?—घ. 3 तदेव—क. 4 न फलकर्तुः—क. 5 न पाठकर्तुः—ङ.

स्वर्गकामपदसमभिव्याहारबलादभिहितं लिङादीनामपूर्वाभिधायकत्वं न स्यादित्यर्थः ॥

एवं स्वर्गकामपदस्य कर्तृपरत्वेन पूर्वपक्षे प्राप्ते राद्धान्तमारभते—

[1] अत्राभिधीयते स्वर्गस्तावत्प्रीत्यात्मकः स्वतः ॥ १४ ॥
स्वत एवेष्टरूपत्वान्न विशेषणतां भजेत् ।

यत्तावदुक्तं [2] स्वर्गस्य कामनायां विशेषणत्वमिति तत्प्रीतिरूपत्वेन पुरुषार्थतया स्वत एवेच्छागोचरस्य स्वर्गस्य विशेष[3]णत्वमयुक्तमित्यर्थः ॥ १४ ॥

स्वर्गस्य विशेषणत्वे न्यायविरोधोऽपीत्याह—

परनिष्पत्तये नेष्ट इति हि न्याय इष्यते ॥ १५ ॥

ननु स्वर्गस्य कथं न विशेषणत्वमित्यत्राह—

समभिव्याहृतं स्वर्गपदं का[म]मिपदेन तु ।
काम्यमानतया साध्यं प्रधानं वदति स्वतः ॥ १६ ॥

का[म]मिपदसमभिव्याहारात्स्वर्गस्य काम्यमानत्वेन प्राधान्यमवगम्यते । कामनाविषयत्वेन कृतिसाध्यत्वादित्यतो न विशेषणत्वं युक्तमित्यर्थः ॥ १६ ॥

ननु का[म]मिपदसमभिव्याहारात्स्वर्गस्य कामनाकर्मत्वमत्रावगम्यते । न तु प्राधान्यमित्यत्राह—

कामनाकर्मता स्वर्गे न हि साध्यत्वमन्तरा ।
इति साध्यतया स्वर्गः प्रधानत्वेन सम्मतः ॥ १७ ॥

कामनां प्रति कर्मभूतस्य स्वर्गस्य कामनाविषयतया कृतिसाध्यत्वेन प्राधान्यं स्वत एवापततीत्यत एव स्वर्गकाम[4]नावान् कर्ता न भवतीत्यर्थः ॥ १७ ॥

ननु [5] यदि स्वर्गकामः कर्ता न भवति, कथं तर्हि स्वर्गकामस्यान्वय इत्यत्राह—

साध्यस्वर्गविशिष्टश्च नरस्साध्यस्य साधनम् ।
जानन् कार्यतया कार्यं नियोज्य इति गीयते ॥ १८ ॥

कालान्तरभाविनं स्वर्गं कामयमानः तत्साधनं कार्यत्वेनावगच्छति । फलस्य साक्षात्कृतिसाध्यत्वाभावात् क्षणिकस्य यागस्य कालान्तरभाविफलसाधनत्वाभावात् साध्यमपूर्वं कार्यत्वेनावयन् नियोज्यत्वेनान्वेति ।“ नियोज्यः स [6] च कार्यं यस्स्वकीयत्वेन बुध्यते ” इत्युक्तत्वादित्यर्थः ॥ १८ ॥

---

[1] तत्राभि—क. ङ.  [2] स्वर्गकामनायां विशेषण—ख. घ.  [3] णत्वादयुक्त—क. ङ.
[4] नार्थकर्ता—क.  [5] यस्य—ग.  [6] तु—ख.

ननूक्तं सिद्धसाध्यसमभिव्याहारे 'सिद्धं साध्यायोपदिश्यते' इति न्यायाद्यागस्य साध्यतया प्रतीतौ स्वर्गकामस्य तदानुगुण्येन भवितव्यमित्यत्राह—

**यच्चाभ्यधायि भावार्थनयाद्धात्वर्थसाध्यता ।**
**इतरस्याऽऽनुगुण्येन स्यात्तदन्वयितेति तत् ॥ १९ ॥**
**अस्माकमविरोध्येव स्वर्गे साध्यतया स्थिते ।**
**इतरस्याऽऽनुगुण्येन यस्मादन्वय इष्यते ॥ २० ॥**

नहि सिद्धसाध्यन्यायोऽस्माभिरपि निराक्रियते । अपित्वपूर्वस्य लिङादिना कृतिसाध्यतयाऽभिधानादितरस्य तदानुगु[1]ण्येनैवान्वयप्रतिपादनादङ्गीक्रियत एवेत्यर्थः । ॥ १९-२० ॥

ननु भावार्थाधिकरणन्यायस्य कुत्रापि विषयो न लभ्यत इत्यत्राह—

**[2]यत्र स्वर्गेण समभिव्याहारो नैव विद्यते ।**
**साध्यता तत्र धात्वर्थस्येतरत्र तु नैव सा ॥ २१ ॥**

अधिकारवाक्ये स्वर्गपदसमभिव्याहारात्तत्र स्वर्गस्यैव साध्यत्वेनेतरस्य तदानुगुण्येनान्वयः । अन्यत्र तु क्रियाया एव साध्यत्वादितरस्य तदानुगुण्येनान्वयोऽस्तीति भावार्थाधिकरणन्यायस्य विषयो लभ्यत इत्यर्थः ॥ २१ ॥

नन्वधिकारवाक्यस्थलेऽपि स्वर्गकामस्य नियोज्यत्वेनान्वयेऽपि प्रधानापूर्वस्यैव साध्यतया स्वर्गस्य साध्यत्वाभावेन तत्साधनता यागस्य न स्यादित्यत्राह—

**साध्यसाधनभावो हि तथैव स्वर्गयागयोः ।**
**अभिधत्ते नियोज्यं तु स्वर्गकामपदं यथा ॥ २२ ॥**

साध्यस्वर्गविशिष्टस्य नियोज्यत्वात्स्वर्गस्यापि नियोज्यकृतिसाध्यत्वाद्यागस्यापि स्वर्गार्थप्रवृत्तकृतिसाध्यत्वेन यागस्य स्वर्गसाधनत्वमस्त्येवेत्यर्थः ॥ २२ ॥

ननु साध्यस्वर्गविशिष्टत्वे समाने कर्तृनियोज्ययोः को भेद इत्याशङ्कते—

**अथोच्यते नियोज्यस्य कर्तुश्चैक्यं भवत्विति ॥**

अन्वये व्यापारे प्रतीतौ च उभयोरपि विलक्षणत्वान्नानयोरैक्यसम्भावनाऽपीति परिहरति—

**तन्नानयोर्बहुविधो भेदो यस्मात्प्रतीयते ॥ २३ ॥**

---

1 ण्येनान्वय—ख. ग. 2 यस्य—ख.

व्यापारभेदात्तावदनयोर्भेदं दर्शयति—

नियोज्यः स हि यः कार्यं ममेदमिति बुध्यते ।
कर्ता तु धातुनोपात्तव्यापारं प्रति कारणम् ॥ २४ ॥

ममेदं कार्यमित्येवं बोधो नियोज्यस्य व्यापारः । धात्वर्थभूतक्रियाऽनुष्ठानं कर्तुर्व्यापार इति भेद इत्यर्थः ॥ २४ ॥

अन्वयतो भेदं दर्शयति—

कार्यबोधदशायां तु नियोज्यस्यान्वयो मतः ।
कर्तुस्त्वनुष्ठीयमानधात्वर्थेनान्वयो मतः ॥ २५ ॥

आत्मीयत्वेन बुद्ध्यमाननियोगरूपकार्येण नियोज्यस्यान्वयः, अनुष्ठीयमानक्रियऽन्वयः कर्तुरित्येवमन्वयभेदादेव प्रतीतिभेदोऽपि सिद्ध इति भावः ॥ २५ ॥

नन्वाख्यातात्कर्तृसङ्ख्यानुविधानं स्वर्गकामपदस्य कर्तृपरतामवगमयतीत्युक्तमित्यत्राह—

[1—2] आख्यातकर्तृसङ्ख्यानुविधानं यत्प्रकीर्तितम् ।
तत्कर्त्रनभिधानेऽपि युक्तमाक्षेप[3]सत्त्वतः ॥ २६ ॥

स्वर्गकामपदेन कर्त्रनभिधाने च निराश्रयसङ्ख्याया अभावात्सङ्ख्यया स्वाश्रयकर्त्राक्षेपादाक्षेपलभ्यकर्तृसङ्ख्यानुविधानं युज्यत इत्यर्थः ॥ २६ ॥

उक्तरीत्या स्वर्गकामपदं कृतिसाध्यतया लिङ्प्रतीयमानस्यापूर्वस्य कृत्याश्रयाकाङ्क्षायां कृत्याश्रयत्वेन नियोज्यं समर्पयतीति नियोज्याभिधायकमेव, न कर्त्रभिधायकमित्याह—

तत्स्वर्गकामशब्दोऽयं कृतेराश्रयभावतः ।
नियोज्यमेवाभिधत्त इति कर्तुर्न वाचकः ॥ २७ ॥

ननु स्वर्गकामपदस्य नियोज्यपरत्वप्रतिपादनेन पूर्वं यदुक्तं कार्यस्य प्राधान्यं 'कृतिसाध्यं प्रधानमि'त्यादिना तन्न स्यादेव । तथा चैकं सन्धित्सतोऽपरं प्रच्यवत इत्याक्षिपति—

अथोच्यते नियोज्यस्य ममेदं कार्यमित्यपि ।
भावात्कार्यस्य गुणता प्रधानत्वं न विद्यते ॥ २८ ॥

नियोज्यो हि कार्यं ममेदमित्यवगच्छति । तथा च कार्यस्य गुणत्वेन प्राधान्यं न स्यादित्यर्थः ॥ २८ ॥

---

1 आख्यातात्कर्मसङ्ख्यानुवि—ख. 2 आख्यातापूर्वस—घ. 3 पक्षतः—घ.

ननु ममेदमित्यवगतिमात्रेण कथं प्राधान्यच्युतिरित्याशङ्क्य दृष्टान्तप्रदर्शनेन द्रढयन्नाह—

**स्वस्वामिभावसंबन्धे षष्ठीयं दृश्यते यथा ।**
**चैत्रस्य गाव इत्यत्र विभाति गुणता गवाम् ॥ २९ ॥**

ममेति षष्ठी तावन्नियोज्यकार्ययोः सम्बन्धमन्तरेण न घटते । स च सम्बन्धोऽत्र स्वस्वामिभावलक्षणः । तत्र नियोज्यस्य स्वामितया कार्यस्य स्वत्वेन गुणत्वमापतति । 'चैत्रस्य गाव' इत्यत्र यथा चैत्रस्येति षष्ठ्या स्वामित्वं चैत्रस्य, गवां च स्वत्वेन गुणत्वं, तद्वत् 'ममेदं कार्य' मित्यत्र नियोज्यस्य स्वामित्वेन कार्यस्य गुणत्वमनिवार्यमित्यर्थः ॥ २९ ॥

तमेतमाक्षेपं समाधत्ते—

**इति चेदुच्यते स्वर्गकामस्यात्र कृतिं प्रति ।**
**अन्वयो न तु कार्येण तन्न प्राधान्यविच्युतिः ॥ ३० ॥**

सत्यम्, षष्ठ्या स्वामित्वं नियोज्यस्य प्रतीयते । तत्तु कृतिं प्रत्येव । न तु कार्यं प्रति । मत्कृतिसाध्यमित्येवं नियोज्यस्य स्वामित्वेन कृत्यैवान्वयादित्यर्थः ॥ ३० ॥

ननु यदि नियोज्यस्य स्थायित्वेन कृत्यैवान्वयः । कथं तर्हि कार्येणान्वय-इत्यत्राह—

**कार्येण तु नियोज्यस्य गुणत्वेनैव चान्वयः ।**

[1] नियोज्यस्य कार्यमित्यत्र कृतिसाध्यत्वेन नियोगस्य प्राधान्यात्तदन्वयो नियोज्यस्य गुणत्वेनान्वय इत्यर्थः ॥

ननु यदि नियोज्यस्य गुणत्वेनैवान्वयः शेषत्वमपि तर्हि स्यादित्यत्राह—

**गुणत्वमपि नात्यन्तमतो नैवास्ति शेषता ॥ ३१ ॥**

गुणत्वमात्रेण शेषत्वं नापतति । शेषत्वस्याऽऽत्यन्तिकगुणरूपत्वात् । अत्र चात्यन्तिकगुणत्वाभावादित्यर्थः ॥ ३१ ॥

ननु यदि स्वर्गकामस्यादौ 'ममेदं कार्य' मित्येवं बोद्धृत्वलक्षणं नियोज्यत्वं, कस्तर्ह्यधिकारीत्यत्राह—

**स एव कर्मणैश्वर्यमवाप्य फलसाधने ।**
**अधिकारी मम फलं साधयत्कर्म मत्कृते ॥ ३२ ॥**

मत्फलसाधनत्वान्मदर्थमिदं कर्मेति फलार्थकृतिव्याप्ते कर्मणि स्वामीभवन्नियोज्य एवाधिकारीत्यर्थः ॥ ३२ ॥

---

1 नियोज्यं कार्यमित्यत्र—ङ.

तस्यैव समनन्तरं क्रियानुष्ठातृत्वलक्षणं कर्तृत्वमित्याह—

**इति बुद्ध्वा क्रियायास्तु साधयन्ननुतिष्ठति ।**
**स तु कर्ता भवेत्कर्मगुणभावादितीर्यते ॥ ३३ ॥**

आदौ नियोगे 'ममेदं कार्य' मिति स्वर्गकामस्य गुणतया नियोज्यत्वेनान्वयः । अनन्तरं फलसाधनभूते कर्मणि स्वामितयाऽन्वयादैश्वर्यलक्षणमधिकारित्वम् । पश्चात्तस्यैव क्रियां प्रति गुणत्वेनानुष्ठानदशायामनुष्ठातृत्वलक्षणं कर्तृत्वमित्येवं नियोज्याधिकारि-कर्तृभेद इति भावः ॥ ३३ ॥

उक्तप्रकारेण प्रतिपादितनियोज्यनिरूपणस्योपयोगं दर्शयति—

**तस्मान्नियोज्यसमभिव्याहारेण लिङादयः ।**
**क्रियातिरिक्तमेवाहुर्वेदे कार्यमिति स्थितम् ॥ ३४ ॥**

लोके तावद्वृद्धव्यवहारबलात्कार्यमेव लिङाद्यर्थ इति निर्णीतम् । वेदेऽपि तदनु-सारेणैव कार्यार्थत्वं वर्णनीयम् । तत्तु कार्यं गवानयनादिवत्क्रियारूपं न भवति । क्षणभङ्गिन्याः क्रियायाः कालान्तरभावि[1]फलसाधकत्वाभावेन स्वर्गकामस्य कार्यतया वेदनानर्हत्वादित्येवं निरूपितस्य प्रमेयस्योपयुक्तं नियोज्यनिरूपणमित्यर्थः ॥ ३४ ॥

ननु यदि वैदिकलिङादीनां स्वर्गकामपदसमभिव्याहारादेव स्थायिकार्याभिधाय-कत्वं तर्ह्यश्रुतनियोज्यकेषु वाक्येषु लिङादीनामर्थान्तरमेव वर्णनीयं स्यादित्यत्राह—

**यत्र त्वसौ नियोज्योऽपि न वाक्ये श्रूयते तदा ।**
**तत्रोपादानकल्प्योऽसौ यथा विश्वजिदादिषु ॥ ३५ ॥**

सत्यम्, नियोज्यसमभिव्याहारादेव वैदिकलिङादीनां स्थाय्यपूर्वार्थत्वं प्रथमतो निर्णीतम् । तद्बलादन्यत्राश्रुतनियोज्यके विश्वजिदादौ स्थाय्यपूर्वार्थकत्वमेव भवति । व्युत्पत्तिबलायातस्यार्थस्य निमित्तमन्तरेण दुर्निवारत्वात् । तत्र तु विध्याक्षेपरूपो-पादानरूपप्रमाणगम्यो नियोज्य इत्ययमर्थश्चतुर्थे (जै. सू. अ. ४ पा. २ अधि. ५) निरूपित इत्यर्थः ॥ ३५ ॥

नन्वश्रुतनियोज्य[2]केष्वपि वाक्येषु यदि लिङादीनां स्थाय्यपूर्वार्थत्वमेव, किमिति तर्हि विध्याक्षेपबलान्नियोज्यपरिकल्पनमित्यत्राह—

**तत्रापि हि लिङाऽपूर्वं यच्च कार्यतयोच्यते ।**
**कृत्यधीनस्वभावं तत्कृतिश्च विषयं विना ॥ ३६ ॥**

---

[1] फलं प्रति सा—क. ख.     [2] केषु वाफक्येषु—क.

**नास्ति सा विषयाधीनस्वभावा विषयश्च सः ।**
**कर्तारमन्तरेणानुष्ठानाभावान्न सिध्यति ॥ ३७ ॥**

**कर्ताऽपि कर्मणैश्वर्यं विना स्वफलसाधने ।**
**नानुतिष्ठति तत्कर्म नानियोज्यश्च चेश्वरः ॥ ३८ ॥**

**अविशिष्टो नियोज्यश्च नेति तस्य विशेषणम् ।**
**स्वर्ग एवानवच्छिन्न उपादानेन कल्प्यघते ॥ ३९ ॥**

इदमत्राभिप्रेतम्—लिङादीनां स्थायिकार्याभिधायकत्वं व्युत्पत्तिबलादनुशासनबलाच्च सिद्धम् । तच्चाभिधेयं कार्यं नियोज्यमन्तरेणापर्यवसितं सन्नियोज्यमाक्षिपति । तथाहि—कार्यं तावत्कृतिसाध्यत्वेन कृत्यधीनात्म[1]लाभत्वात्कृतिमपेक्षते । कृतिश्च विषयाधीनस्वलाभत्वाद्विषयमपेक्षते । विषयश्च स्वानुष्ठानार्थं कर्तारम् । कर्ताऽ[2]पि कर्मणि मादर्थ्यलक्षणमधिकारमनधिगम्य क्रियां नानुतिष्ठति । अधिकारोऽपि नानियोज्यस्य भवति । नियोज्यश्चाविशिष्टो न भवतीत्येवं लिङादीनामपूर्वाभिधानपर्यवसानार्थं स्वर्गोऽत्र विशेषणत्वेन विध्याक्षेपरूपोपादनेन कल्प्यत इत्यर्थवानेवाश्रुतनियोज्यके विश्वजिदादौ नियोज्यपरिकल्पनार्थमारम्भ इति ॥ ३६–३९ ॥

ननु विश्वजिदादौ नियोज्यः परिकल्प्यमानोऽपि जीवनवानेव भवतु । तथा सति तस्यैव [3] विशेषणत्वं भविष्यतीत्यत्राह—

**विशेषणत्वमप्यत्र जीवनादेर्न युज्यते ।**

कुत इत्यत्राह—

**तथा सति प्रयुक्तिः स्यात्प्रधानस्य विलम्बिनी ॥ ४० ॥**

यदि विश्वजिदादौ नियोज्यविशेषणत्वेन जीवनं परिकल्प्येत, तदा विश्वजिदादेर्नित्यत्वापत्तेः साऽपि प्रधाने विधित एव प्रयुक्तिः स्यात् । तथा च गौरवं, विलम्बश्च भवेत् । अतो जीवनादिकं विहाय फलमेव नियोज्यविशेषणत्वेन कल्प्यमित्यर्थः ॥ ४० ॥

फले तु नियोज्यविशेषणत्वेन परिकल्प्यमाने कामाधिकारतया करणांशे रागादेव प्रयुक्तिः स्यात् । तथा च लाघवं, न विलम्बश्चेत्याह—

**फलं यदि प्रकल्प्येत प्रयुक्तिः स्यात्तदा फलात् ।**

प्रधानांश इति शेषः । अङ्गेष्वेव विधितः प्रवृत्तिरिति न गौरवमितिभावः ॥

---

[1] लाभवत्वा—क. [2] ग. [3] विशेषणत्वं न भविष्यती—क.

ननु प्रयुक्तिलाघवाद्यदि नियोज्यविशेषणत्वेन फलमेव परिकल्प्यं स्यात्तर्हि पशुपुत्रादिफलं किमिति न कल्प्यत इत्यत्राह—

फलं च पशुपुत्रादि नावच्छिन्नतयेष्यते ॥ ४१ ॥

पशुपुत्रादिमतां तदपेक्षाराहित्येन परिमितत्वात्पशुपुत्रादिफलं न विशेषणत्वेन कल्प्यत इत्यर्थः ॥ ४१ ॥

स्वर्गस्य तु सर्वपुरुषकाम्यमानत्वेनानवच्छिन्नत्वात्तत्कल्पनमेवोचितमित्याह—

स्वर्गात्मके फले सर्वपुरुषाणां हि कामना ।
अतः फलं तदेवात्र नियोज्यस्य विशेषणम् ॥ ४२ ॥

ननु सर्वपुरुषकाम्यमानत्वं स्वर्गस्यानुपपन्नं, मुमुक्षुभिरन[1]पेक्षणीयत्वादित्यत्राह—

न च वाच्यं मुमुक्षूणां न स्वर्गेऽप्यास्ति कामना ।
इति तेन सहापेक्षं फलमात्रमपि स्वयम् ॥ ४३ ॥

न हि मुमुक्षवः कर्मण्यधिक्रियन्ते । "शान्तो दान्त उपरत" इत्यादिभिरिहामुत्रफलभोगविरक्तस्याध्यात्मविद्यायामेवाधिकारदर्शनात् । न च "यज्ञेन दानेने"त्यादिना तेषामपि कर्मण्यधिकार इति वाच्यम् । तत्रापि चित्तशुद्धिसंपादनद्वारा विविदिषासाधनत्वेनाऽऽरादुपकारकत्वस्यैवोक्तत्वात् । अतो न तेषामधिकार इति भावः ॥ ४३ ॥

कस्य तर्ह्यधिकार इत्यत्राह—

ततः फलार्थिनामेव स्वर्गोऽत्र परिकल्प्यते ।

फलकामस्यैव नियोज्यस्य विशेषणत्वेन स्वर्गात्मकं फलं परिकल्प्यत इत्यर्थः ॥

उक्तमर्थमुपसंहरति—

अतो नियोज्यरहितस्थले स्वर्गो विशेषणम् ॥ ४४ ॥
कल्प्यतां स्वर्गकामस्य नियोज्यत्वं तथा भवेत् ।

अश्रुतनियोज्यके विश्वजिदादौ कृतिसाध्यतया लिङादिभिरभिधीयमानमपूर्वं नियोज्यमन्तरेणापर्यवसितं स्वर्गकामं नियोज्यत्वेन परिकल्पयतीत्यर्थः ॥ ४४ ॥

उक्तमर्थं सूत्रारूढं करोति—

सर्वान् प्रत्यविशिष्टत्वात्स स्वर्गोऽत्र भवेदिति ॥ ४५ ॥

'स स्वर्गः सर्वान् प्रत्यविशिष्टत्वात्' इति । (जै. सू. अ. ४. पा. ३, सू. १) अस्य सूत्रस्यायमर्थः । अवच्छेदकत्वेन नियोज्यं व्यावर्तयन् विशेषः स्वर्ग एव स्यात्,

---

[1] पेक्षितत्वा—क. ग. ङ.

कुतः? सर्वान् पशुपुत्रादिसुखविशेषान् [1]प्रत्यविष्टत्वात् अनवच्छिन्नत्वात्। अथ वा सर्वानध्येतॄन् प्रति साधारणत्वादिति। एवमर्थद्वयेनापि पूर्वोक्तं प्रमेयं सूत्रारूढमित्यर्थः ॥ ४५ ॥

अत्राश्रुतनियोज्यकस्य विश्वजिदुदाहरणं न संभवति। 'सत्रायागूर्य विश्वजिता यजेते'ति सत्रागूरणवतो विश्वजित्यधिकारप्रदर्शनादिति चोदयति—

ननु सत्रागूरणवतो विश्वजित्यधिकारिता।
अतोऽत्र नोपादानेन स्वर्गस्य परिकल्पनम् ॥ ४६ ॥

नोदाहरणमादरणीयं, कृत्वाचिन्तयाऽपि न्यायप्रवृत्तेरिति समाधत्ते—

इतिचेदुच्यते नोदाहरणं दोषभाक्कदा।
अनाम्नाताधिकारं यत्पितृयज्ञोऽपि तद्भवेत् ॥ ४७ ॥

यदि विश्वजिन्नाश्रुतनियोज्यकः, तर्हि "अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ती" त्यश्रुतनियोज्यस्य पिण्डपितृयज्ञस्योदाहरणत्वमस्तु, विश्वजितस्तूदाहरणत्वेन प्रदर्शनं कृत्वाचिन्तयाऽपि न्यायप्रवृत्तिसूचनार्थमित्यर्थः ॥ ४७ ॥

ननु तर्हि रात्रिसत्रादावश्रुतनियोज्यके किमुपादानकल्प्यः स्वर्गकाम एव नियोज्यः? नेत्याह—

श्रूयते यत्र तु फलमर्थवादेषु यत्तदा।
आर्थवादिकमेवात्र रात्रिसत्रादिषु स्थितम् ॥ ४८ ॥

न हि तत्र स्वर्गात्मकं फलमुपादानतो नियोज्यविशेषणत्वेन कल्प्यते। 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ती 'त्यर्थवादत एव प्रतिष्ठारूपस्य फलस्यावगतत्वात्तदेवात्र नियोज्यविशेषणत्वेनाङ्गीक्रियते लाघवादित्यर्थः ॥ ४८ ॥

उक्तन्यायमन्यत्राप्यतिदिशति—

तथा वेदान्तवाक्येषु चामृतत्वादिकं फलम्।
आर्थवादिकमेवैतत्कामिनोऽपि नियोज्यता ॥ ४९ ॥

तत्रापि हि 'एतावदरे खल्वमृतत्व' मित्यार्थवादिकं फलममृतत्वं 'श्रोतव्य' इत्यत्र धात्वर्थभूतश्रवणक्रियाविषयकृतिसाध्यापूर्वे नियोज्यविशेषणत्वेनाङ्गीक्रियते। तथा चामृतत्वकामस्तन्नियोज्य इत्यर्थः ॥ ४९ ॥

---

[1] प्रत्यपि शिष्टत्वात्—घ.

अत्र लब्धावकाशश्शङ्कते—

नन्वेवमर्थवादेषु श्रुतं स्याच्चेत्फलं तदा ।
दुर्वादाश्रवणेच्छोः स्यात्पर्णतायां नियोज्यता ॥ ५० ॥

" यस्य पर्णमयी जुहूर्भवति न स पापꣳ श्लोकꣳ श्रुणोती " ति दुर्वादाश्रवणस्यार्थवादतः फलत्वेनावगमात्तत्कामस्य पर्णतायां नियोज्यत्वं रात्रिसत्रन्यायेन भवेदित्यर्थः ॥ ५० ॥

परिहरति—

इति चेदुच्यते तत्र जुहूद्वारा हि पर्णता ।
जुहूमत्क्रत्वपूर्वार्था भवेत्तन्न पृथक्फलम् ॥ ५१ ॥

पर्णता हि जुहूप्रकृतित्वेनानारभ्य [1] पठिता । जुहूश्च दर्शपूर्णमासनियोगान्विता । ' जुह्वा जुहोती' ति श्रवणात् । तेन पर्णताऽपि जुहूद्वारा जुहूमत्क्रत्वपूर्वार्था भवतीति पर्णतायाः प्रधानफलेनैव फलवत्त्वम् । तेन नात्र रात्रिसत्रन्याय इति " अङ्गेषु फलश्रुतिरर्थवादस्स्यादि " त्यत्र (जै. सू. अ. ४ पा. ४ सू. १) चतुर्थे पर्णमय्यधिकरणे निरूपितमित्यर्थः ॥ ५० ॥

ननु " स्वाध्यायोऽध्येतव्य " इत्यत्राध्ययनविधौ निर्नियोज्ये किं पिण्डपितृयज्ञन्यायेन स्वर्गो नियोज्यविशेषणत्वेन परिकल्पनीयः? किं वा रात्रिसत्रन्यायेनाऽऽर्थवादिकदधिमधुघृतकुल्यादितृप्तपित्रादिलब्धायुरादिसर्वफलावाप्तिरित्याशङ्क्य नोभयमप्यत्र क्रमते, किं तु प्रकारान्तरमित्याह—

यत्रापि विधितोऽप्यस्ति प्रयुक्तिस्तत्र नैव हि ।
अपेक्ष्यते नियोज्योऽसौ यद्वदध्ययनादिषु ॥ ५२ ॥

अध्ययनविधौ तावन्नियोज्यापेक्षा [2] नास्त्येव । अध्ययनानुष्ठानस्यान्यतो लब्धत्वात् ॥ ५२ ॥

कुतोऽन्यत इत्यत्राह—

अध्यापनविधेरेव प्रयुक्तिस्तत्र लभ्यते ।
यस्मादध्ययनस्यातो न नियोज्यस्य कल्पना ॥ ५३ ॥

अध्यापनविधिरेवाध्ययनस्य प्रयोजको भवति । अतो न पिण्डपितृयज्ञन्यायेन स्वर्गकल्पनम् । नापि रात्रिसत्रन्यायेनाऽऽर्थवादिकफलस्याभ्युपगमः । अर्थवादानामेव

---

1 अधीता—ध. 2 नास्ति—क.

फलप्रापकाणामभावात् । न चैवं '[1]यदृचोऽधीत' इत्यादयोऽर्थवादा इति वाच्यम् । तेषां ब्रह्मयज्ञ[2]विधिशेषत्वात् । न च तेषामतिदेशतो लाभाद्युक्तमेव तदीयफलस्य नियोज्यविशेषणत्वमिति वाच्यम् । तत्र प्रमाणाभावाद्गौरवाच्चेति भावः ॥ ५३ ॥

ननु कथमध्यापनविधिप्रयुक्तत्वमध्ययनस्य ? तयोर्भिन्नकर्तृकत्वादित्यत्राह—

**अध्यापकः खलु स्वस्याऽऽचार्यीभवनमिच्छति ।**
**तत्साधनतयाऽध्यापने स्वयं च प्रवर्तते ॥ ५४ ॥**

सत्यमध्ययनाध्यापनयोर्भिन्नकर्तृकत्वम् । तथाप्याचार्यीबुभूषुस्तत्साधने प्रवर्तते । "यो हि यदिच्छति स तत्करोति तदुपायं वेति" न्यायादित्यर्थः ॥ ५४ ॥

नन्वेतावताऽपि नाध्ययनविधिरध्यापनविधिप्रयुक्तः प्रतीयत इत्यत्राह—

**अध्यापनं चाध्ययनमन्तरेण न सिध्यति ।**
**अतोऽध्यापयिता शिष्यमुपनीय श्रुतेर्बलात् ॥ ५५ ॥**
**प्रवर्तयत्यध्ययने नात्र तत्कामिकल्पना ।**

अध्ययनमन्तरेणाध्यापनस्यासिद्धत्वात् ।

"उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् ।

वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत्" ॥ (याज्ञवल्क्य.—अ. १ श्लो. १५)

इति वचनादध्यापयिता माणवकमध्ययने प्रवर्तयतीत्येवमध्ययनस्याध्यापनविधिप्रयुक्तत्वान्न तत्र नियोज्यकल्पनमित्यर्थः ॥ ५५ ॥

अत्राध्ययनविधावर्थज्ञानकामस्य नियोज्यत्वं भविष्यति, किमिति स्वतन्त्रस्याध्ययनविधेः परप्रयुक्त्युपजीवित्वं वर्ण्यत इत्याशङ्कते—

**नन्वर्थज्ञानकामस्य नियोज्यत्वं न किं भवेत् ॥ ५६ ॥**
**तथा चाध्ययनस्यास्य विधितो न प्रयोज्यता ।**

परिहरति—

**इति चेदुच्यतेऽर्थावबोधस्य न हि काम्यता ॥ ५७ ॥**
**प्रागध्ययनतो यस्मान्न प्रियत्वेन गम्यते ।**

लोके हि पुरुषार्थतया ज्ञाते वस्तुनि कामना दृष्टा । न पुनरज्ञाते । अत्र चार्थज्ञानं माणवकेनाध्ययनात्पूर्वं न प्रियत्वेन ज्ञातम् । अतो न तद्गोचरा कामनोपपद्यते । तेन तत्कामस्य नियोज्यत्वं न संभवतीत्यर्थः ॥ ५७ ॥

---

[1] यद्यबोधित—क. ख. [2] विधिविशेषत्वात्—ङ.

ननु माणवकस्याध्ययनात्पूर्वमर्थज्ञानगोचरप्रियत्वज्ञानाभावेऽपि ज्ञातवेदवेदार्थो गुरुरेवार्थमभ्युदयकरत्वेन बोधयन्माणवकस्य कामनामुत्पादयिष्यतीत्याशङ्क्याह—

**किं चार्थज्ञानकामोऽप्यधिकारी नोपपद्यते ॥ ५८ ॥**
**हुमादीनां हि वर्णानां नह्यर्थपरताऽपि च ।**

स्यादेवं यदि सर्वस्यापि वेदराशेरर्थपरत्वं स्यात् । न त्वेतदस्ति । हुमादीनामर्थपरत्वाभावात् । न च सर्वस्यापि वेदार्थस्याभ्युदयकरणत्वम् । नित्यनैमित्तिकविधीनामतथात्वादिति भावः ॥ ५८ ॥

ननु हुमादीनां कथमर्थपरत्वाभाव इत्यत्राह —

**ते हि स्तोभाक्षरत्वेन नार्थज्ञानपरा मताः ॥ ५९ ॥**
**ऋगक्षरैरसंबद्धसामभागस्य पूरकाः ।**
**इत्युक्तं नवमे तेषामप्यर्थपरता भवेत् ॥ ६० ॥**

हुमादयो हि स्तोभाक्षरत्वेन ऋगक्षराव्याप्तसामभागपरिपूरकतया नार्थज्ञानपरा इति नवमे प्रतिपादितत्वादि[1]त्यर्थः ॥ ६० ॥

निगमयति—

**अतोऽर्थज्ञानकामस्य न नियोज्यत्वमिष्यते ।**

अर्थज्ञानस्य काम्यत्वानुपपत्तेस्तत्कामस्य नियोज्यत्वं न संभवतीत्यर्थः ॥

ननु यदि निर्नियोज्यकोऽध्ययनविधिस्तर्ह्यधिकारिणोऽपि राहित्या[2]दनुष्ठाता न स्यादित्यत्राह —

**किं त्वर्थज्ञानवानेवाधिकारी कल्प्यते तदा ॥ ६१ ॥**
**वेदाध्ययनमीमांसाश्रुत्योरिति निरूपितम् ।**

अध्यापनविधिबलादाचार्य एवाध्ययने माणवकं प्रवर्तयतीत्यनुष्ठाता तावद्विद्यत एव । अधिकारो व्युत्पन्नार्थज्ञानस्य माणवकस्याध्ययनमीमांसाश्रवणयोर्मध्ये कल्प्यत इत्यर्थज्ञानवानेवाधिकारी । तेन निर्नियोज्यकोऽध्ययन[3]विधिर्न दुष्यतीत्यर्थः ॥

इदमिदानीं वक्तव्यम् । अध्ययनमन्तरेणाध्यापनस्यासिद्धेरध्यापनविधिरेवाध्ययनं प्रयुङ्क्त इति प्रतिपादितम् । तदिदानीं विपरीतं दृश्यते । अध्यापनमन्तरेणाध्ययननिष्पत्तेरभावात्, प्रयोजकव्यापारस्य प्रयोज्यव्यापारहेतुत्वात्, तेनाध्यापनमेवाध्ययन-

---

[1] दिति भावः—क. ङ, [2] दधिकारिता—क. ङ. [3] धिरिष्यते—ग,

विधिप्रयोज्यमुक्तमि[1]ति। नैतद्युज्यते। अध्ययनस्वरूपस्यै[2]वास्थानसिद्धेः। तथाहि—तत्किमध्ययनं कामाधिकारप्रयुक्तं? उत स्वविधिप्रयुक्तम्? यद्याद्यः कल्पः [3]अध्ययने शूद्राणामधिकारः स्यात्। अध्ययनस्य कामाधिकारविध्यविषयत्वेन शूद्रादेः कामाधिकारेऽनधिकारो वक्तव्यः। अध्ययनं चेत्कामाधिकारप्रयुक्तं तदा शूद्रस्यापि कामनासद्भावादधिकारो दुर्वारः स्यात्। तत्प्रयुक्तत्वेन चाध्ययनेऽप्यनुपनीतस्याप्यधिकारः स्यात्, उपनयनमपि वाऽऽक्षिपेत्। सति चैवं वसन्तादिवाक्यानि निमित्तार्थानि भवेयुः। तस्मान्न कामाधिकारप्रयुक्तिरध्ययनस्य॥

नच स्वविधिनैवाध्ययनं प्रयुज्यत इति द्वितीयः कल्पः। बालस्य ममेदं कार्यमिति बोधाभावादध्ययनविमुखत्वाच्च कुण्ठि[4]तप्रयुक्तिशक्तिरध्ययनविधिः कथमिवाध्ययनं प्रयुञ्जीत। स्वकरणानुष्ठान एवाशक्तः कथमन्यप्रयुक्तौ प्रगल्भः स्यात्। यदि पुनरध्यापकप्रवर्तित एव बालोऽध्ययने प्रवर्तेत इत्युच्येत तिष्ठतु दूरेऽध्ययनविधेरध्यापनप्रयोजकत्वकथा। तस्मात्स्वविधिप्रयुक्तिरध्ययनस्य नास्तीति परप्रयुक्तिरन्वेषणीया। तत्र न कामाधिकारोऽध्ययनस्य प्रयोजकः। अध्यापनविधिस्तु स्यादेव। अध्यापयेदित्यत्र प्रकृत्यर्थभूतस्याध्ययनस्य प्रयोज्यव्यापारस्य प्रयोजकव्यापारमध्यापनं प्रत्युपकारकत्वस्य मिलिताभ्यां प्रकृतिप्रत्ययाभ्यां प्रतिपादनात्। उपकारस्य चोपकार्यप्रयुक्तत्वात्। नचाध्ययनस्य कामाधिकारोपकारकत्वे प्रमाणमस्ति, येन तत्प्रयुक्तिः स्यात्। नच विद्यायाः कामश्रुत्यङ्गतयाध्ययनं विना विद्याया असंभवाद्विद्यां प्रयुञ्जाना कामश्रुतिरध्ययनमपि प्रयुङ्क्त इति वाच्यम्। साक्षादध्यापनोपकारित्वादध्ययनस्य तत्प्र[5]युक्तयैव शीघ्रगामिन्या आकाङ्क्षायाः शान्तत्वाच्च॥

किंच कामश्रुतिप्रयुक्तत्वेऽपि कामनारहितस्य कामश्रुत्यङ्गं विद्येत्यजानतस्तदुपयोग्यध्ययनमित्यप्यमन्यमानस्य बालकस्य कथं तत्प्रयुक्तिप्रवृत्तिः। तत्र चान्यप्रवर्तितः प्रवर्तेत इति वक्तव्यम्। न[6]चाध्ययनविधिप्रयुक्तत्वे सम्यगाचार्यः प्रवर्तक इति। तस्मादाचार्यकरणविधिप्रयुक्तिरेव युक्तेति। अध्यापनविधिरपि बालस्याप्रवृत्तौ किमिव हि कर्तुं शक्नोतीति तन्न। बालस्याप्रवृत्तौ स्वकर्तृकाध्यापनस्य अध्ययनमन्तरेणानुपपत्तेरध्या[7]पक एव प्रवर्तयिष्यतीति किमनुपपन्नम्। नच माणवकेनानध्ययनेऽपि [8]कामश्रुतिकर्मकर्तुः स्वानुष्ठानस्यनुपपत्तिः, येन स एव माणवकं प्रवर्तयेत्॥

---

[1] ति सारम्—ग. [2] वास्थानासिद्धेः—घ. [3] अध्ययने न—ग. ङ. [4] तत्प्रभूतप्रयुक्तशक्ति—क.ङ. [5] युक्तेरेव—ङ. [6] चान्यविधिप्रयुक्तत्वे सत्याचार्यः—क. ङ. [7] पनस्याध्ययनमेव प्रदर्शयि—घ. [8] कामश्रुतिकर्तुः स्वानुष्ठानस्योपपत्तिः—ख.

ननु कामश्रुतिरेव स्वकालेऽनुष्ठेयकर्माङ्गभूतविद्यासिध्यर्थमुपनीतावस्थं माणवकमध्ययने प्रवर्तयिष्यतीति तन्न। बालस्यैवमनुसन्धानाभावात्। अनुसन्धानाभावे च प्रवृत्तेरनुपपत्तेः। नचाध्ययनात्प्राग्बालस्य कामश्रुतिपरिज्ञानं, येन तत्प्रयुक्तोऽध्ययने प्रवर्तेत। अध्ययनेन च तज्ज्ञाने परस्पराश्रयत्वम्। तस्मान्न कामाधिकारविधिप्रयुक्तिरध्ययनस्य। अध्यापनविधेस्तु प्रयुक्तिर्भवति॥

"उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते॥" (मनु. अ. २. श्लो. १४०).

इति वचनादाचार्यत्वमिच्छतोऽध्यापने प्रवृत्तत्वात्। अध्यापनस्याध्ययनमन्तरेणानिष्पत्तेः॥

"हितं [1] तस्याचरेन्नित्यं मनोवाक्कायकर्मभिः।
आहूतश्चाप्यधीयीत लब्धं [2] चास्मै निवेदयेत्॥ (याज्ञवल्क्य—अ. १. श्लो. २७)

इत्यादिविशेषस्मृतिविहिताचरणदक्षिणादानादिदर्शनात्तल्लिप्सुराचार्यीभवनमिच्छन् माणवकमध्ययने प्रवर्तयतीत्येवमध्यापनविधिप्रयुक्तमेवाध्ययनमिति सर्वं सुस्थम्॥ ६१॥

यद्यध्यापनविधिप्रयुक्तिरध्ययनस्य स्यात्, तदाऽध्यापनाङ्गत्वमध्ययनस्य स्यादिति चोदयति—

**नन्वाचार्यविधेरेवाध्ययनस्य प्रयोज्यता ॥ ६२॥**
**यदि स्यादङ्गता तर्हि भवेत्तस्य च तं प्रति।**

क्रत्वपूर्वप्रयुक्तानां व्रीह्यवहननादीनां क्रत्वङ्गत्वा[त्वव]दिति भावः॥ ६२॥

तदेतत्समाधत्ते—

**इति चेदुच्यतेऽङ्गत्वं न प्रयुक्तेः [3] प्रसज्यते॥ ६३॥**
**कामश्रुतिप्रयोज्यत्वेऽप्याधानस्याङ्गता न हि।**

न प्रयुक्तिरङ्गत्वे तन्त्रम्, कामश्रुतिप्रयुक्तस्याधानस्य तदङ्गत्वाभावादितिभावः॥ ॥ ६३॥

नन्वाधानस्य वा कथमङ्गत्वाभाव इत्यत्राह—

**आधानस्याङ्गतायां च श्रुत्यादेर्न च मानता॥ ६४॥**
**न हि प्रकरणे तस्य पाठोऽनारभ्य पाठतः।**

श्रुत्यादीनि हि प्रमाणान्यङ्गत्वबोधकानि। न चाधानस्य क्रत्वङ्गत्वे श्रुत्यादीनि क्रमन्ते। 'अग्नीनादधीते' त्यत्र द्वितीयाश्रुतिस्तावन्नाधानस्य क्रतुशेषत्वं बोधयति।

---

1 चास्य च—ङ. 2 चास्मिन् निवेशयेत्—ङ. 3 प्रयुज्यते—ङ.

अग्निमात्रशेषत्वबोधने चरितार्थत्वात् । न च प्रकरणात्क्रतुशेषत्वम् । अनारभ्याधीतत्वादिति भावः ॥ ६४ ॥

अनारभ्याधीतस्याप्याधानस्याऽऽहवनीयद्वारा क्रत्वन्वयो भविष्यति । 'आहवनीये जुहोती' ति तस्य क्रत्वन्वयात् । यथाऽनारभ्याधीताया अपि पर्णताया जुहूद्वारा क्रत्वन्वय इत्याशङ्कते—

अथानारभ्य [1] पाठेऽपि जुहूद्वारा हि पर्णता ॥ ६५ ॥
यथा क्रत्वन्विता दृष्टाऽऽधानमप्येवमिष्यताम् ।
तत्राप्याहवनीयादेराधानद्वारतेति चेत् ॥ ६६ ॥

तदेतत्परिहरति—

नैतदाहवनीयादेर्लोकतः सिद्धिरिष्यते ।
लौकिकत्वेन जुह्वादेः पर्णताद्यन्वयो मतः ॥ ६७ ॥

युज्यते जुह्वादेर्लौकिकत्वेन पूर्वं प्रसिद्धत्वात्तद्द्वारा पर्णतान्वयः । आहवनीयस्य त्वलौकिकत्वान्न तन्मुखेनाऽऽधानस्य क्रत्वन्वयो युक्त इत्यर्थः ॥ ६७ ॥

अवान्तरप्रकृतमुपसंहरति—

तस्मादध्ययनस्याङ्गभावो नास्ति प्रयुक्तितः ।
अनुष्ठानं तदास्तीति न नियोज्यस्य कल्पना ॥ ६८ ॥

अध्ययनस्याध्यापनविधिप्रयुक्तत्वेऽप्यङ्गत्वाभावात्तत्प्रयुक्तिबलादेवानुष्ठानस्यापि लाभात्पि[ण्डपि]तृयज्ञन्यायेन वा रात्रिसत्रन्यायेन वा नियोज्यकल्पनमध्ययनविधौ नास्तीत्यर्थः ॥ ६८ ॥

इत्थमियता प्रबन्धेन प्रतिपादि[2]तनियोज्यनिर्णयस्योपयोगमाह—

तस्मात्सर्वविधिष्वेव नियोज्योऽपेक्षितस्ततः ।
स्थायिकार्यं तत्समभिव्याहाराच्च लिङोच्यते ॥ ६९ ॥

नियोज्याकाङ्क्षायाः सर्वविधिसाधारण[3]त्वान्न तन्निरूपणमयुक्तं, तेन नियोज्यसमभिव्याहारादेव [4] स्थाय्यपूर्वकार्यं लिङादिभिरभिधीयत [5] इत्यर्थः ॥ ६९ ॥

एव[6]मखिलशङ्काकलङ्करहितत्वाल्लोकवेदयोः समत्वाच्च कार्यान्वय एवाङ्गीकरणीय इत्युपसंहरति—

अतः कार्यान्वये दोषलवोऽपीह न विद्यते ।
तत्कार्यस्य लिङर्थत्वमिष्यतां लोकवेदयोः ॥ ७० ॥

---

1 वादेऽपि—घ. 2 ते नियोजनिर्णयेऽस्यो—घ. 3 त्वात्तन्निरूपणमुपयुक्तम्—ङ.
4 स्वाध्यायापू—घ. 5 इति भावः—ख. 6 मतीव श—घ.

एवं प्रसक्तानुप्रसक्तया बहुविधप्रमेय[1]निर्णायकन्यायनिरूपणेन व्याकुलितचित्तानां श्रोतॄणां चेतःसमाधानार्थं वाक्यार्थं संकलय्य कथयितुमारभते—

**तथा च सति वाक्यार्थ एवं संपद्यते यथा ।**

किं तद्वाक्यं ? कश्च वाक्यार्थः ? इत्याकाङ्क्षायां वाक्यमुदाहरति—

**स्वर्गकामो यजेत ज्योतिष्टोमेनेति हि श्रुतम् ॥ ७१ ॥**

वाक्यार्थं कथयितुमादौ तावद्वाक्यस्थपदानामर्थमाह—

**लिङ्प्रत्ययेन [2] यत्कार्यं कृतिसाध्यतयोच्यते ।**
**तत्कृतेर्विषयत्वेन प्रकृत्या याग उच्यते ॥ ७२ ॥**

यजेतेत्यत्र प्रत्ययेन कृतिसाध्यतयाऽपूर्वमभिधीयते । तत्र कृतेस्तत्साध्यस्य कर्तृसंख्यायाश्च शब्दार्थत्वेऽपि 'यत्परो हि शब्दः स शब्दार्थ' इति न्यायेन प्राधान्येनापूर्वस्य वाक्यार्थत्वं, कृत्यभिधानं तु कार्याभिधानेनैव लभ्यत इत्यनन्यलभ्यः शब्दार्थ इति कार्यस्य प्राधान्येन प्रत्ययार्थत्वे कृतिसङ्ख्ययोरुपसर्जनत्वमेकेनैवाभिधाव्यापारेणा[3]वगम्यते । व्यापारान्तराभ्युपगमे विरम्य व्यापारापत्तेः । नचैकेनैवाभिधाव्यापारेण शब्दतात्पर्यगोचरस्यार्थद्वयस्य कथं प्रधानोपसर्जनभाव इति वाच्यम् । शब्दस्य तथाविधसामर्थ्यावधारणात् । यथा वा जातेः शब्दार्थत्वेऽपि व्यक्तेर्मु[4]ख्यवृत्त्या शब्दतात्पर्यगोचरत्वमेकधीवेद्य[5]तया तावदभ्युपगम्यते, शब्दस्य तथाविधसामर्थ्यावधारणात् । तेन लिङ्प्रत्ययस्य कार्याभिधायितायां यजिप्रकृत्याऽऽकाङ्क्षितविषयसमर्पणं क्रियत इति भावः ॥ ७२ ॥

एवं यजेतेत्यस्यार्थमभिधाय स्वर्गकामपदस्यार्थमाह—

**स्वर्गकामपदं त्वत्र तत्कृत्याश्रयभावतः ।**
**नियोज्यमभिधत्ते यः कार्यबोद्धा निगद्यते ॥ ७३ ॥**

यजेतेत्यत्र यागविषयकृतिसाध्यमित्युक्ते पूर्णायां विषयाकाङ्क्षायां कृत्याश्रयं समर्पयदिदं स्वर्गकामपदं नियोज्याभिधायकम् । कोऽसौ नियोज्य इत्यत उक्तं 'यः कार्यबोद्धे'ति । ममेदं कार्यमिति नियोग[6]बोद्धृत्वलक्षणको नियोज्य इत्यर्थः ॥ ७३ ॥

ननु कार्यप्रतीत्युपयुक्तं "स्वर्गकामो यजेत" त्येतावतैवोक्तम्, तथा च ज्योतिष्टोमेनेति पदेन किमभिधीयत इत्यत्राह—

**ज्योतिष्टोमप्रकृत्या तु यागनामाभिधीयते ।**
**तृतीयया तु यागस्य करणत्वमनूद्यते ॥ ७४ ॥**

---

1 निर्णयनि—घ. 2 यत्साध्यं—ङ. 3 वगतत्वाद्द्वा—ङ. 4 ख्यतया—ङ, 5 ‌‌‌‌‌‌[illegible]ता ताव—ख. ग. 6 बोध्यत्वलक्षणो—ङ.

यजेतेत्यत्र धातुना विहितस्य यागस्य सामान्यरूपतया विशेषपर्यवसानार्थं ज्योतिष्टोमप्रातिपदिकेन यागनाम समर्थ्यते। तृतीयाविभक्त्या यागस्य करणत्वमनूद्यते ॥ ७४॥

नच यागस्य करणत्वमप्राप्तं कथमनूद्यत इति वाच्यमित्याह—

***उपादानप्रमाणेन फलं प्रति यदागतम् ॥ ७५॥**

उपादानेति—सत्यम्, न शब्दाभिधानतः प्राप्तं यागस्य करणत्वम्, किन्तूपादानेन विध्याक्षेपरूपेण प्राप्तं यागस्य फलं प्रति करणत्वमित्युक्तम्। तदिदानीं तृतीयया साध्यत इति युक्तमित्युक्तमित्यर्थः ॥ ७५॥

एवं [1] पदशोऽर्थं विविच्य संप्रति समस्तवाक्यार्थमाह—

**स्वर्गकामनियोज्याश्रिता यागविषया कृतिः।**
**कृतिसाध्यमपूर्वं चेत्ययमर्थो गुरोर्मते ॥ ७६॥**

स्वर्गकामनियोज्याश्रितज्योतिष्टोमनामकयागविषयकृतिसाध्यमपूर्वमिति गुरुमते वाक्यार्थ इत्यर्थः ॥ ७६॥

ननु ज्योतिष्टोमाधिकारवाक्यस्यैवमर्थवर्णनमस्तु। इतरेषामधिकारवाक्यानां कथमर्थो वर्णनीय इत्यत्राह—

**सर्वाधिकारवाक्यानामेवमेवार्थ इष्यताम्।**

यथा ज्योतिष्टोमाधिकारवाक्यस्यार्थो वर्णितस्तथैवेतरेषामप्यधिकारवाक्यानां स्वाराज्यकामाश्रितवाजपेयनामकयागविषयकृतिसाध्यमपूर्वमित्यादिना प्रकारेण [2]यथार्हमर्थवर्णनं कार्यमित्यर्थः ॥

राजसूयाधिकारवाक्ये तु विशेषोऽस्तीत्याह—

**यद्राजसूयाधिकारवाक्यं [3] तत्र भिधाऽस्तितु ॥ ७७॥**

कस्तत्र विशेष इत्यत्राह—

**तत्र स्वाराज्यकामस्य नियोज्यत्वं प्रतिष्ठितम्।**
**यत्तु राजपदं तत्तु कर्तुरेवाभिधायकम् ॥ ७८॥**

'राजा राजसूयेन स्वाराज्यकामो यजेते'ति राजपदमेकमधिकम्, तच्च कर्तृपरमिति विशेष इत्यर्थः ॥ ७८॥

---

[1] पदपदार्थ—क.ङ. [2] यथार्थम—क. ङ. [3] तत्राभिदाऽस्ति तु—क. ङ.

* उपादानेति सत्यं तन्न च जब्दाभिधानतः। अयं श्लोकभागः घ पुस्तके ७५ श्लोकसंबन्धितया दृश्यते।

ननु किमिति राजपदस्याक्षेपलभ्यकर्तृपरत्वमुच्यते । वाक्यस्थस्वाराज्यकामनियोज्ये विशेषणमेव किन्न स्यादित्यत्राह—

**विशेषणं नियोज्यस्याभिदध्यात्तत्पदं यदि ।**
**वाक्यभेदः प्रसज्येत तत्तस्यानभिधायकम् ॥ ७९ ॥**

स्वाराज्यकामस्य नियोज्यत्वे सति राजपदस्य कर्तृपरत्वं विहाय नियोज्यविशेषणत्वं यदि [1] वर्ण्येत, स्वाराज्यकामो नियोज्यः, स च राजेति, तर्हि नियोज्यस्यानुपादेयत्वेन तद्विशेषणविवक्षायां वाक्यभेदः प्रसज्येतेत्यर्थः ॥ ७९ ॥

नन्वनुपादेयगतविशेषणविवक्षायां वाक्यभेदः स्यादिति कुत्रोक्तमित्याशङ्क्याह—

**विशेषणं विवक्ष्येतानुपादेयगतं यदि ।**
**[2]भिद्येत वाक्यमित्येवं ग्रहाधिकरणे स्थितम् ॥ ८० ॥**

'ग्रहं संमार्ष्टि' त्यत्र किमेकग्रहस्य संमार्गः? उत सर्वेषामिति संशये—न तावदयं विशिष्टविधिः, ग्रहाणां पूर्वमेव प्रसक्त्वात् । न च ग्रहोद्देशेन संमार्गो विधीयत इतिवाच्यम् । तथा च ग्रहस्यानुपादेयत्वेन तद्विशेषणस्यैकत्वस्य विवक्षायां वाक्यभेदः स्यात् । अतो नैकग्रहस्य संमार्गः। अपि तु सर्वेषामिति तृतीये श्रुतिपादे ग्रहाधिकरणे प्रतिपादितमित्यर्थः॥ ॥ ८० ॥

तेनात्रापि [3] स्वाराज्यकामनियोज्यस्यानुपादेयत्वेन राजपदस्य विशेषणतया विवक्षाया अयुक्तत्वादाक्षेपलभ्यकर्तृविशेषणपरत्वमेव युक्तमित्याह—

**अतो राजपदं राजसूयकर्तुर्विशेषणम् ।**
**वदेत्तत्र समन्वेति न नियोज्यविशेषणम् ॥ ८१ ॥**

अत्र चोदयति—

**ननु द्वयोः प्रतिपदं कुर्वीत यजमानयोः ।**
**इत्यत्र वाक्यभेदोऽपि नास्ति तद्वत्त्वेन किम् ॥ ८२ ॥**

अस्ति [4]कुलाययज्ञो राजकर्तृकः । तत्र "द्वयोर्यजमानयोः प्रतिपदं कुर्वीते" त्यत्र किं यजमानयोरित्युद्देश्यसमर्पकम् ? किं वा द्वयोरिति संशये—यदि यजमानयोरित्युद्देश्यसमर्पकं भवेत्तदा द्वयोरिति विशेषणविवक्षायां वाक्यभेदः स्यात् । तस्माद्द्वयोरित्येवोद्देश्यसमर्पणेन कयोर्द्वयोरित्याकाङ्क्षायां यजमानयोरित्याकाङ्क्षा[5]पूरकत्वेनान्वेतीत्युक्तम् । तद्वदत्रापि स्यादित्यर्थः ॥ ८२ ॥

---

1 तर्क्येत–घ. 2 भिद्यते–क. 3 स्वराज्यकामस्या–घ. 4 किलायं य–घ. 5 व्यापक–घ.

[1] तदेतत्परिहरति—

[2] उच्यते तत्र चोद्देश्यं यजमानपदं यदि ।
[3] तदा द्वयोरिति पदं न विशेषणवाचकम् ॥ ८३ ॥
विशेषणविवक्षायां वाक्यभेदप्रसक्तितः ।
तस्माद्द्वयोरिति [4] पदेनोद्देश्यस्य समर्पणे ॥ ८४ ॥
[5] यजमानयोरिति पदं पूरकं परिकीर्त्यते ।

युक्तं तत्र द्वयोरित्युद्देश्यस्यापरिपूर्णत्वाद्यजमानपदस्य तत्पूरकत्वं, वैपरीत्येनान्वये वाक्यभेद[6]प्रसङ्गात् । प्रकृते तु नैवमित्याह—

अत्र राजपदं स्वर्गकामं न विशिनष्टि तत् ॥ ८५ ॥
वाक्यभेदात्किंतु यागकर्तारं विशिनष्टि तत् ।

कमिपदसंबन्धात्स्वाराज्यकामपदस्यैव नियोज्यपरत्वं वक्तव्यम्, न राजपदस्य, विशेषणत्वाभावात् । तथा च राजपदस्य नियोज्यविशेषणपरत्वे वाक्यभेदप्रसङ्गात्कर्तृपरत्वमेवेति भावः ॥ ८५ ॥

एवं सति राजसूयवाक्यस्य कथमर्थवर्णनमित्यत्राह—

ततश्च स्वाराज्यकामनियोज्याश्रयिणी कृतिः ॥ ८६ ॥
सा राजकर्तृकयजिविषयेत्यवधार्यते ।
कृतिसाध्यमपूर्वं चेत्यर्थो वाक्यस्य [7] वर्णितः ॥ ८७ ॥

"राजा राजसूयेन स्वाराज्यकामो यजेते" ति वाक्यस्य स्वाराज्यकामनियोज्याश्रितराजकर्तृकयागविषयकृतिसाध्यमपूर्वमित्यर्थः ॥ ८७ ॥

नन्वत्र राजसूयपदस्य तृतीयायाश्चार्थो नान्वेतीत्यत्राह—

राजसूयपदं चात्र यागनामसमर्पकम् ॥ ८८ ॥
करणत्वमुपादानात्प्राप्तं यागस्य तत्तथा ।
तृतीययाऽनूद्यत इति तद्वाक्यार्थप्रवेशिका ॥ ८९ ॥

यथा ज्योतिष्टोमाधिकारवाक्ये ज्योतिष्टोमपदं 'यजेते' त्यत्र प्रकृत्युपात्तस्य कर्मणो नामसमर्पकं, तृतीया चौपादानिक फलकरणत्वमनुवदतीत्युक्तम् । तद्वदेवात्र राजसूयपदं

---

[1] वैपरीत्ये थोषमाह—क. ङ. [2] अन्यथा—क. ङ. [3] वदेद्द्वयीरिति—क. ङ. [4] पदं चोद्देश्यस्य समर्पकम्—क. ङ [5] यजमानपदं तस्य—क. ङ. [6] दः आनर्थक्यं चेत्यर्थः. [7] तस्य च ।—घ.

कर्मनाम, तृतीया [1] चौपादानिकफलकरणत्वानुवादिकेत्येवं वाक्यार्थानुप्रवेश इत्यर्थः। एवं सति स्वाराज्यकामनियोज्याश्रितराजकर्तृकराजसूयनामकयागविषयकृतिसाध्यमपूर्वमिति राजसूयाधिकारवाक्यार्थ इत्युक्तं भवति ॥ ८९ ॥

एवं परिच्छेदचतुष्टयेनापि प्रतिपादि[2]तप्रमेयमुपसंहरति—

**तस्मात्प्रवर्तकं लोकवेदानुगतभावतः।**
**एष्टव्यं कार्यमेवेति रमणीयतरं स्थितम् ॥ ९० ॥**

उपक्रमोपसंहारयोरेकरूपत्वेन हि ग्रन्थस्यैकस्मिन्नर्थे तात्पर्यं भवति। तस्मात्प्रवृत्तिहेतुभूतार्थगोचरवादिविप्रतिपत्तिनिराकरणपूर्वकं कार्यमेव प्रवर्तकमिति प्रतिपाद्य तच्च कार्यमपूर्वाख्यं स्थायिकार्यं वैदिकमिति सोपपत्तिकं प्रतिपादितत्वात्कार्यमेव प्रवर्तकमिति रमणीयतरमित्यर्थः ॥ ९० ॥

यत्प्रतिज्ञातं 'गुरुतन्त्रमहाम्भोधिमवगाह्य' त्यादिना तत्तथैवोक्तमित्याह—

**इत्थंप्रकारस्तु गुरोः संप्रदायः प्रदर्शितः।**
**यथाश्रुतं यथाप्रज्ञं विद्वद्भिः परिगृह्यताम् ॥ ९१ ॥**

एवमु[3]क्तेन प्रकारेण [4] प्रभाकरगुरोः संप्रदायो गुरुशिष्यपरंपराप्रा[5]प्तो मार्गो गुरूपदेशतो यथाश्रुतं यथावबुद्धं तथा प्रदर्शितः। न तु किञ्चिदश्रुतं नाप्यनव[6]बुद्धमुक्तम्। तेन विद्वद्भिर्ग्राह्योऽयं ग्रन्थ इत्यर्थः ॥ ९१ ॥

ग्रन्थसमाप्तिं सूचयति—

**इति श्रीवत्सदुर्वा[7]सोमारयार्यस्य सूनुना।**
**अहोबलेन वाक्यार्थरत्नं प्राकाशि सूरिणा ॥ ९२ ॥**

अहोबल इति ग्रन्थकर्तुर्नाम, तेन अहोबलेन सूरिणा विदुषा वाक्यार्थरत्नसंज्ञितो ग्रन्थः प्राकाशि प्रकाशित इत्यनेन स्वकपोलकल्पितं किमपि नास्ति, अपि तु पुरातननिबन्धनकर्तृभिः प्रतिपादितमेवोपन्यस्तमित्युक्तं भवति। कोसावहोबलाख्यो विद्वानित्यत उक्तं **श्रीवत्सेति**—श्रीवत्सगोत्राणां दुर्वाससां वंश्यो यो मारयार्योऽस्ति तत्सूनुरहोबलः, तेनैतद्वाक्यार्थरत्नं प्रकाशितमित्यर्थः ॥ ९२ ॥

---

[1] च करणत्वा—घ. [2] तमर्थमु—घ. [3] क्तप्र—ख. [4] प्राभाकर—ख. ङ. [5] प्राप्तम। [6] बुध्योक्तं—घ. [7] स—ङ.

इत्थं कृतं ग्रन्थमिष्टदेवतायै समर्पयति—

**धर्मब्रह्मसमाख्याभ्यां यो वेदशिरसि स्थितः ।**
**देवः स रामो वाक्यार्थरत्नदानेन तुष्यतु ॥ ९३ ॥**

धर्मसमाख्यया वेदस्य ब्राह्मणवाक्यस्य शिरोवदवस्थिते लिङ्पदे स्थितः । 'चोदनालक्षणोऽर्थो धर्म' इत्युक्तत्वात् । ब्रह्मसमाख्यया वेदानां शिरोभूतेषु वेदान्तेषूपनिषत्सु प्रतिपाद्यतया स्थितः । 'तं त्वौपनिषदं पुरुषं पृच्छामी' ति श्रुत्यनुसारेण 'शास्त्रयोनित्वादि' (ब्र. सू. अ. १. पा. १. सू ३) त्यत्र ब्रह्मणो वेदान्तवेद्यत्वस्यावधृतत्वात् । तेन धर्मसमाख्यया ब्रह्मसमाख्यया च यो रामो वेदशिरःप्रतिपाद्यो वाक्यार्थरत्नसमर्पणेन स रामः प्रीतो भवत्वित्यर्थः ॥ ९३ ॥

॥ इति श्री मारयार्यतनयेन अहोबलेन विरचितायां वाक्यार्थरत्नप्रकाशिकायां सुवर्णमुद्रिकायां स्वर्गकामपदस्य नियोज्यपरत्वनिरूपणं नाम चतुर्थपरिच्छेदः समाप्तः ॥

**समाप्तश्चाऽयं ग्रन्थः**

श्रीकृष्णार्पणमस्तु

---

# सुवर्णमुद्रिकासहितवाक्यार्थरत्नोदाहृत-श्रुत्यादिवाक्यानि.

---

अक्ताश्शर्करा उपदधाति—तै. काठके 3-5
अग्नीनादधीत—शतपथ 1-4-1
अग्नीषोमीयमेकादशकपालम्—तै. संहितायां 2-5-2
अग्नीषोमीयं पशुमालभेत—तै. सं. 6-1-11
अग्नेस्तृणान्यपचिनोति—?
अथातो धर्मजिज्ञासा—जै. सू. 1-1-1
अन्यायश्चानेकार्थत्वम्—शाबरभाष्ये 2-1-12.
अभिधाभावनामाहुरन्यामेव लिङादयः ।
अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते ॥—तन्त्रवा. अ. 2 पा. 1 अधि. 1.
अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति—आ. श्रौ. सू. 1-7-1
आग्नेयोऽष्टाकपालः—तै. सं. 2-6-3
आसीरन् वृद्धिकामाः—?
आहवनीये जुहोति—तै. ब्राह्मणे 1-6-2
उपांशुयाजमन्तरा यजति—तै. सं. 2-6-6
एतावदरे खल्वमृतत्वम्—बृ. उपनिषदि 4-5-15
ऐन्द्रं दध्यमावास्यायाम्—तै. सं. 2-5-4
ऐन्द्रं पयोऽमावास्यायाम्—तै. सं. ?
कृतितत्साध्यमध्यस्थो यागादिर्विषयो मतः ।
कार्ये सङ्कटिताकारे कारणत्वेन संमतः—नयविवेके 2-2-1
ग्रहं संमार्ष्टि—?
चोदनालक्षणोऽर्थो धर्मः—जै. सू. 1-1-2
चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः—शाबरभाष्ये 1-1-2
जुह्वा जुहोति—?
तन्मह इत्युपासीत—तै. उ. 3-10-3
तीर्थे स्नाति—तै. सं. 6-1-1
तेजो वै घृतं—तै. का. 3-5
तं त्वौपनिषदं पुरुषं पृच्छामि—बृ. उ. 3-9-26
दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत—?
द्वयोर्यजमानयोः प्रतिपदं कुर्वीत—?

---

# वाक्यार्थरत्नस्थश्लोकानामकारादिक्रमेणानुक्रमणिका

मैसूरु राजकीय प्राच्यकोशागारे परिष्कृत्य देवनागराक्षरैः सम्मुद्र्य प्रकाशिताः

# संस्कृतग्रन्थाः

---

| | ग्रन्थनाम | मूल्यम् रू. आ. |
|---|---|---|
| *1 | आपस्तम्बगृह्यसूत्रम्, सुदर्शनार्यप्रणीततात्पर्यदर्शनाख्यभाष्यसहितम् .... .... ... | 1 12 |
| *2 | आपस्तम्बयज्ञपरिभाषासूत्रम्, हरदत्तकपर्दिस्वामिभाष्याभ्यां सहितम् .... .... .... | 1 0 |
| *3 | माधवीयधातुवृत्तिः (अदादि-दिवादि-जुहोत्यादयः) .... | 2 0 |
| *4 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा श्रीभट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, प्रथमसंपुटम् | 2 8 |
| *5 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा श्रीभट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, द्वितीयसंपुटम् | 2 8 |
| *6 | दक्षिणामूर्तिस्तोत्रम्, सुरेश्वराचार्यकृतटीकासहितम् .... | 1 4 |
| *7 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा भट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, तृतीयसंपुटम् .... | 3 0 |
| *8 | श्रीभगवद्गीता, श्रीशङ्कराचार्यकृतभाष्यसहिता .... | 2 12 |
| *9 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा भट्टभास्करीयज्ञानयज्ञाख्यभाष्ययुता च, चतुर्थसंपुटम् .... | 3 0 |
| *10 | मण्डलब्राह्मणोपनिषत् .... .... .... | 0 6 |
| *11 | सौन्दर्यलहरी .... .... .... | 1 0 |

---

* एतच्चिह्नाङ्किता ग्रन्थाः संप्रति विक्रयायात्र नोपलभ्यन्ते.

| | ग्रन्थनाम | रू. | आ. |
|---|---|---|---|
| *12 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा भट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, पञ्चमसंपुटम् .... | 3 | 0 |
| *13 | ,, ,, दशमसंपुटम् .... | 3 | 0 |
| *14 | ,, ,, एकादशसंपुटम् .... | 3 | 0 |
| *15 | आपस्तम्बधर्मसूत्रं हरदत्ताचार्यप्रणीतोज्ज्वलाख्यवृत्तियुतम् | 1 | 12 |
| *16 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा भट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, अष्टमं संपुटम् .... | 3 | 0 |
| *17 | ,, ,, नवमं संपुटम् .... | 2 | 4 |
| *18 | ,, ,, द्वादशं संपुटम् .... | 1 | 12 |
| *19 | श्रीशङ्कराचार्यप्रबन्धावली, प्रथमसंपुटम्, (श्रीविष्णुसहस्रनाम—सनत्सुजातीयभाष्यम्) .... | 1 | 4 |
| *20 | ,, द्वितीयसंपुटम् (अपरोक्षानुभूतिः, शतश्लोकी, हरिस्तुतिः, दशश्लोकी च) .... .... | 1 | 4 |
| *21 | ,, तृतीयसंपुटम् (उपदेशसाहस्री, गद्यपद्योभयात्मिका, रामतीर्थव्याख्यायुता) .... .... | 2 | 0 |
| *22 | ,, चतुर्थसंपुटम् (आत्मबोध–विवेकचूडामणि–वाक्यवृत्ति-स्वात्मनिरूपण-योगतारावली-सर्ववेदान्तसिद्धान्तसारसंग्रहाः) .... .... | 1 | 0 |
| *23 | माधवीयधातुवृत्तिः भ्वादौ प्रथमसंपुटम् .... | 2 | 0 |
| *24 | ,, ,, द्वितीयसंपुटम् .... | 2 | 0 |
| *25 | गोत्रप्रवरनिबन्धकदम्बम् .... .... | 2 | 0 |
| *26 | तैत्तिरीयारण्यकम्, सस्वरचिह्नम्, भट्टभास्करीयभाष्यसहितम्, प्रथमसंपुटम् (1–4 प्रश्नाः) .... | 1 | 12 |
| *27 | तैत्तिरीयारण्यकम्, सस्वरचिह्नम्, भट्टभास्करीयभाष्यसहितम्, द्वितीयसंपुटम् (5–6 प्रश्नौ) .... | 1 | 0 |
| *28 | एकाग्निकाण्डः, सस्वरचिह्नः, हरदत्तीयभाष्यसहितः .... | 1 | 4 |
| *29 | तैत्तिरीयारण्यकम्, सस्वरचिह्नं, भट्टभास्करीयभाष्यसहितम्, तृतीयसंपुटम् (7–8 प्रश्नौ) .... | 1 | 0 |

* एतच्चिह्नाङ्किता ग्रन्था: सम्प्रति विक्रयायात्र नोपलभ्यन्ते.

| | ग्रन्थनाम | रू. | आ. |
|---|---|---|---|
| *30 | ब्रह्ममीमांसा, श्रीकण्ठभाष्यसहिता .... .... | 2 | 0 |
| *31 | माधवीयधातुवृत्तिः, स्वादिमारभ्य समग्रा .... | 2 | 0 |
| *32 | बोधायनगृह्यसूत्रम्, सपरिशिष्टम् (प्रथममुद्रणम्) .... | 2 | 4 |
| *33 | तैत्तिरीयप्रातिशाख्यम्, वैदिकाभरणत्रिभाष्यरत्नाख्य-व्याख्याद्वययुतम् .... .... .... | 4 | 0 |
| *34 | बोधायनधर्मसूत्रम्, गोविन्दस्वामिकृतविवरणसमेतम् .... | 3 | 0 |
| *35 | भाट्टदीपिका, प्रथमसंपुटम् (तृतीयाध्याये तुरीयपादान्ता) .... .... .... | 3 | 0 |
| *36 | तैत्तिरीयब्राह्मणम्, सस्वरचिन्हम्, भट्टभास्करीयभाष्ययुतम् .... .... .... .... | 3 | 8 |
| *37 | कौटिलीयमर्थशास्त्रम् (प्रथममुद्रणम्) .... .. | 3 | 0 |
| *38 | तैत्तिरीयब्राह्मणम्, सस्वरचिह्नम्, भट्टभास्करीयभाष्यसहितम् (तृतीयाष्टके 1-7 प्रश्नाः) .... .... | 3 | 8 |
| *39 | श्रीमद्ब्रह्मसूत्रभाष्यम्, आनन्दतीर्थीयम्, तत्त्वप्रकाशिका-चन्द्रिका-प्रकाशसहितम्, प्रथमसंपुटम् .... | 3 | 0 |
| *40 | भाट्टदीपिका, द्वितीयसंपुटम्, (तृतीयाध्याये पञ्चमपादप्रभृति सप्तमाध्यायान्तम्) .... .... | 3 | 0 |
| 41 | खादिरगृह्यसूत्रम्, रुद्रस्कन्दीयवृत्तिसहितम् .... | 1 | 0 |
| *42 | तैत्तिरीयब्राह्मणम्, सस्वरचिह्नम्, भट्टभास्करीयभाष्ययुतम् (तृतीयाष्टके 8–12 प्रश्नाः) .... .... | 2 | 4 |
| 43 | स्मृतिचन्द्रिका, याज्ञिकदेवणभट्टकृता, संस्कारकाण्डः .... .... .... | 1 | 8 |
| 44 | ,, ,, आह्निककाण्डः .... | 2 | 8 |
| 45 | ,, ,, व्यवहारकाण्डे प्रथमसंपुटम् .... .... .... | 2 | 0 |
| *46 | भाट्टदीपिका, तृतीयसंपुटम् (अष्टमाध्यायप्रभृति दशमे चतुर्थपादान्ता) .... .... .... | 2 | 8 |

* एतच्चिह्नाङ्किता ग्रन्थाः संप्रति विक्रयायात्र नोपलभ्यन्ते.

| | ग्रन्थनाम | रू. | आ. |
|---|---|---|---|
| *47 | श्रीमद्ब्रह्मसूत्रभाष्यम्, आनन्दतीर्थीयम्, तत्त्वप्रकाशिका-चन्द्रिका-प्रकाशयुतम्, द्वितीयसंपुटम्, (समन्वयाधिकरणप्रभृति आकाशाधिकरणान्तम्) .... | 3 | 0 |
| 48 | स्मृतिचन्द्रिका, याज्ञिकदेवणभट्टकृता व्यवहारकाण्डे द्वितीयसंपुटम् .... .... .... | 3 | 0 |
| *49 | भाट्टदीपिका, खण्डदेवकृता, चतुर्थसंपुटम् (दशमाध्याये पञ्चमपादप्रभृतिसमग्रा) .... .... | 3 | 0 |
| *50 | गौतमधर्मसूत्रम्, मस्करिभाष्ययुतम् .... .... | 3 | 8 |
| *51 | अलङ्कारमणिहारः, प्रथमसंपुटम्. (समासोक्त्यलङ्कारान्तः) .... .... .... | 3 | 0 |
| 52 | स्मृतिचन्द्रिका, याज्ञिकदेवणभट्टकृता, श्राद्धकाण्डः .... | 4 | 4 |
| 53 | श्रीमद्ब्रह्मसूत्रभाष्यम्, आनन्दतीर्थीयम्, तत्त्वप्रकाशिका-चन्द्रिका-प्रकाशयुतम्, तृतीयसंपुटम्, (प्राणाधिकरणप्रभृति प्रथमे द्वितीयपादान्तम्) .... | 4 | 0 |
| *54 | कौटिलीयमर्थशास्त्रम् (द्वितीयमुद्रणम्) .... .... | 3 | 0 |
| *55 | बोधायनगृह्यसूत्रम्, सपरिशिष्टम् (द्वितीयमुद्रणम्) .... | 2 | 4 |
| 56 | स्मृतिचन्द्रिका, याज्ञिकदेवणभट्टकृता, आशौचकाण्डः .... .... .... | 1 | 8 |
| 57 | तैत्तिरीयब्राह्मणम्, सस्वरचिह्नम्, भट्टभास्करीयकाचित्कसायणभाष्याभ्यां युतम्, द्वितीयाष्टकम् .... | 3 | 8 |
| 58 | अलङ्कारमणिहारः, द्वितीयसंपुटम् (परिकरालङ्कारप्रभृति मालादीपकालङ्कारान्तः) .... .... | 3 | 8 |
| 59 | श्रीमद्ब्रह्मसूत्रभाष्यम्, आनन्दतीर्थीयम्, तत्त्वप्रकाशिका-चन्द्रिका-प्रकाशयुतम्, चतुर्थसंपुटम्, (प्रथमाध्याये तृतीयपादे आदितः अपशूद्राधिकरणान्तम्) .... | 3 | 8 |
| *60 | काव्यप्रकाशः, मम्मटभट्टकृतः, माणिक्यचन्द्रकृतसङ्केताख्यटीकायुतः .... .... .... | 3 | 8 |

* एतच्चिह्नाङ्किता ग्रन्था: संप्रति विक्रयायात्र नोपलभ्यन्ते.

| | ग्रन्थनाम | रू. | आ. |
|---|---|---|---|
| 61 | आयुर्वेदसूत्रम्, योगानन्दनाथभाष्यसहितम् .... | 2 | 0 |
| 62 | अलङ्कारमणिहारः, तृतीयसंपुटम् (सारालङ्कारप्रभृति हेत्वलङ्कारान्तः) .... .... .... | 2 | 8 |
| 63 | विद्यामाधवीयम्, विष्णुशर्मकृतमुहूर्तदीपिकाटीकायुतम्, प्रथमसंपुटम् (1-5 अध्यायाः) .... .... | 2 | 0 |
| 64 | कौटिलीयमर्थशास्त्रम् (तृतीयमुद्रणम्) .... .... | 3 | 0 |
| 65 | अर्थशास्त्रपदसूची प्रथमसंपुटम् .... .... | 2 | 8 |
| 66 | ,, द्वितीयसंपुटम् .... .... | 2 | 8 |
| 67 | विद्यामाधवीयम्, विष्णुशर्मकृतमुहूर्तदीपिकाटीकायुतम् द्वितीयसंपुटम् (6-10 अध्यायाः) .... .... | 2 | 0 |
| 68 | अर्थशास्त्रपदसूची, तृतीयसंपुटम् .... .... | 2 | 0 |
| 69 | अभिलषितार्थचिन्तामणिः, प्रथमसंपुटम् .... | 2 | 0 |
| 70 | विद्यामाधवीयम्, विष्णुशर्मकृतमुहूर्तदीपिकाटीकायुतम् तृतीयसंपुटम् (11-15 अध्यायाः) .... .... | 1 | 8 |
| 71 | सरस्वतीविलासः, व्यवहारकाण्डः .... .... | 2 | 8 |
| 72 | अलङ्कारमणिहारः, चतुर्थसंपुटम् (रसवदलङ्कारप्रभृति समग्रः) .... .... .... | 2 | 4 |
| 73 | आपस्तम्बशुल्बसूत्रम्, कपर्दीय — करविन्दीय — सुन्दरराजीयव्याख्याभिस्सहितम् .... .... | 2 | 12 |
| 74 | तर्कताण्डवम्, व्यासयतिकृतम्, न्यायदीपाख्यव्याख्यायुतम्, प्रथमपरिच्छेदः .... .... | 3 | 0 |
| 75 | अद्वैतसिद्धिः, मधुसूदनसरस्वतीकृता, गुरुचन्द्रिकाटीकायुता, प्रथमसंपुटम् (प्रथमपरिच्छेदे विश्वमिथ्यात्वप्रभृत्यागमादिबाधोद्धारान्ता) .... .... | 3 | 12 |
| 76 | तत्त्वमुक्ताकलापः, सर्वार्थसिद्धितद्व्याख्यादियुतः, प्रथमसंपुटम्, जडद्रव्यसरः .... .... | 4 | 0 |
| 77 | तर्कताण्डवम्, व्यासयतिकृतम्, न्यायदीपाख्यव्याख्यायुतम्, द्वितीयसंपुटम् (द्वितीयपरिच्छेदे विधिवादान्तम् .... .... .... | 2 | 0 |

| | ग्रन्थनाम | रू. | आ. |
|---|---|---|---|
| 78 | अद्वैतसिद्धिः, मधुसूदनसरस्वतीकृता, गुरुचन्द्रिकाटीकायुता, द्वितीयसंपुटम्, प्रथमपरिच्छेदे असतस्साधकत्वोपपत्तिप्रभृति अविद्याप्रतिपादकश्रुत्युपपत्तिपर्यन्ता | 3 | 4 |
| 79 | तर्कताण्डवम्, न्यायदीपाख्यव्याख्यायुतम्, तृतीयसंपुटम् | 2 | 0 |
| 80 | अद्वैतसिद्धिः, गुरुचन्द्रिकोपेता, तृतीयसंपुटम् (प्रथमपरिच्छेदान्ता) .... .... .... | 2 | 4 |
| 81 | तत्त्वमुक्ताकलापः, सर्वार्थसिद्धितद्व्याख्यादियुतः, द्वितीयसंपुटम् .... .... .... | 3 | 0 |
| 82 | तर्कताण्डवम्, न्यायदीपाख्यव्याख्यायुतम्, चतुर्थसंपुटम् | 2 | 4 |
| 83 | वाक्यार्थरत्नम्, सुवर्णमुद्रिकायुतम् .... .... | .... | |
| 84 | मैसूरुराजकीयकोशागारस्थलिखितसंस्कृतग्रन्थसूची, सविवरणा, प्रथमसंपुटम्, वेदाः (संहिता, ब्राह्मणं, आरण्यकं, उपनिषत्, मन्त्रसंग्रहश्च).... .... | 3 | 12 |

## ಮೈಸೂರು ಗೌರ್ನಮೆಂಟ್ ಓರಿಯಂಟಲ್ ಲೈಬ್ರರಿಯಿಂದ ಪ್ರಕಟಿಸಲ್ಪಟ್ಟ

## ಕನ್ನಡ ಗ್ರಂಥಗಳು.

| | | ಬೆಲೆ ರೂ. | ಆ. |
|---|---|---|---|
| *1 | ಪಂಪಮಹಾಕವಿಯ ಆದಿಪುರಾಣ ... .... | 2 | 8 |
| *2 | ರುದ್ರಭಟ್ಟನ ಜಗನ್ನಾಥವಿಜಯ (ಮೊದಲನೆಯ ಮುದ್ರಣ) .... | 2 | 12 |
| 3 | ಸದಾನಂದಯೋಗಿಯ ಮಹಾಭಾರತ (ಪೌಲೋಮಾಸ್ತೀಕ ಪರ್ವಗಳು). .... | 1 | 8 |
| 4 | ಕುಮಾರವ್ಯಾಸನ ಮಹಾಭಾರತ ಸಂಭವಪರ್ವ .... .... | 2 | 0 |
| 5 | ,, ಜತುಗೃಹಾದಿಪರ್ವ .... | 1 | 12 |
| 6 | ,, ಸಭಾಪರ್ವ .... .... | 1 | 12 |
| 7 | ,, ಅರಣ್ಯಪರ್ವ .... .... | 2 | 0 |
| *8 | ,, ವಿರಾಟಪರ್ವ .... .... | 1 | 8 |
| 9 | ಲಿಂಗಣ್ಣನ ಕೆಳದಿ ನೃಪವಿಜಯ .... .... | 1 | 8 |
| 10 | ಸೋಮರಾಜನ ಉದ್ಭಟಕಾವ್ಯ .... .... | 2 | 0 |
| 11 | ರುದ್ರಭಟ್ಟನ ಜಗನ್ನಾಥವಿಜಯ (ಎರಡನೆಯ ಮುದ್ರಣ) .... | 2 | 12 |
| *12 | ಕುಮಾರವ್ಯಾಸನ ಮಹಾಭಾರತ ಉದ್ಯೋಗಪರ್ವ .... | 1 | 2 |
| 13 | ಸೋಮನಾಥನ ಅಕ್ರೂರಚರಿತ್ರೆ .... .... | 1 | 0 |
| 14 | ನಯಸೇನನ ಧರ್ಮಾಮೃತ ಸಂ. I .... .... | 2 | 4 |
| 15 | ಗೋವಿಂದವೈದ್ಯನ ಕಂಠೀರವ ನರಸರಾಜವಿಜಯ .... | 2 | 8 |
| 16 | ನಯಸೇನನ ಧರ್ಮಾಮೃತ ಸಂ. II .... .... | 1 | 4 |
| 17 | ವೀರಭದ್ರನೃಪಾಲನ ವೀರಭದ್ರವಿಜಯ .... .... | 1 | 4 |
| 18 | ಜನ್ನನ ಅನಂತನಾಥಪುರಾಣ .... .... .... | 2 | 0 |
| 19 | ಸಕಲವೈದ್ಯಸಂಹಿತಾಸಾರಾರ್ಣವ ಸಂ. I .... .... | 1 | 14 |
| *20 | ಕುಮಾರವ್ಯಾಸನ ಮಹಾಭಾರತ ಭೀಷ್ಮಪರ್ವ .... .... | 1 | 0 |
| 21 | ,, ದ್ರೋಣಪರ್ವ .... .... | 1 | 12 |
| 22 | ನಾಗವರ್ಮನ ಕಾವ್ಯಾವಲೋಕನ (ದ್ವಿತೀಯ ಮುದ್ರಣ) .... | 1 | 8 |
| 23 | ಕುಮಾರವ್ಯಾಸನ ಮಹಾಭಾರತ ಕರ್ಣಪರ್ವ .... .... | 2 | 4 |
| 24 | ,, ಶಲ್ಯ ಗದಾಪರ್ವಗಳು .... | 1 | 0 |

* ಈ ಗುರ್ತಿರುವ ಗ್ರಂಥಗಳು ಈಗ ಬೆಲೆಗೆ ದೊರೆಯುವುದಿಲ್ಲ.

# LIST OF WORKS PUBLISHED BY THE MYSORE GOVERNMENT ORIENTAL LIBRARY, MYSORE.

## A.—Sanskrit Publications.

| No. | Title | Price Rs. | a |
|---|---|---|---|
| *1. | Apastamba Grihya Sutra with the commentary of Sudarsanacarya ... ... ... | 1 | 12 |
| *2. | Apastamba Paribhasha Sutra with the commentaries of Haradatta and Kapardi Swami ... | 1 | 0 |
| *3. | Madhaviya Dhatuvritti, Vol. II, Part I (Adadi-Divadi Juhotyadi) ... ... | 2 | 0 |
| *4. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Swarapatha, Vol. I | 2 | 8 |
| *5. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol II ... ... ... | 2 | 8 |
| *6. | Dakshinamurtistotra with the commentary of Suresvaracharya ... ... ... | 1 | 4 |
| *7 | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. III ... ... ... | 3 | 0 |
| *8. | Bhagavadgita with the commentary of Sankaracarya ... ... ... | 2 | 12 |
| *9. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. IV ... ... ... | 3 | 0 |
| *10. | Mandala Brahmanopanishad with a commentary ... | 0 | 6 |
| *11. | Saundaryalahari with the commentary of Lakshmidhara, Bhavanopanishad with a commentary, and Devipancastavi ... ... ... | 1 | 0 |
| *12. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. V ... ... ... | 3 | 0 |
| *13. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. X ... ... ... | 3 | 0 |

*N.B.*—Numbers marked thus * are out of stock.

| No. | Title | Price Rs. | a. |
|---|---|---|---|
| *14. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. XI ... ... ... | 3 | 0 |
| *15. | Apastamba Dharma Sutra with the commentary called Ujjvala ... ... ... | 1 | 12 |
| *16. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. VIII ... ... ... | 3 | 0 |
| *17. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. IX ... ... ... | 2 | 4 |
| *18. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. XII ... ... ... | 1 | 12 |
| *19. | Sankaracarya's Miscellaneous Works, Vol. I, commentaries on Vishnusahasranama and Sanatsujatiya ... ... ... | 1 | 4 |
| *20. | Sankaracarya's Miscellaneous Works, Vol. II, Aparokshanubhuti, Satasloki, Haristuti and Dasasloki with a commentary ... ... | 1 | 4 |
| *21. | Sankaracarya's Miscellaneous Works, Vol. III, Upadesasahasri with a commentary ... | 2 | 0 |
| *22 | Sankaracarya's Miscellaneous Works, Vol. IV, Atmabodha, Vivekacudamani, Vakyavritti, Svatmanirupana, Yogataravali, Sarva-vedanta-siddhanta-sarasangraha ... ... | 1 | 0 |
| *23. | Madhaviya Dhatuvritti, Vol. I, Part I (Bhvadi) ... | 2 | 0 |
| *24. | Madhaviya Dhatuvritti, Vol. I, Part II (Bhvadi)... | 2 | 0 |
| *25. | Gotra pravara-nibandha-kadambakam ... | 2 | 0 |
| *26. | Taittiriyaranyaka with the commentary of Bhatta-Bhaskara with Svarapatha, Vol. I ... | 1 | 12 |
| *27. | Taittiriyaranyaka with the commentary of Bhatta-Bhaskara with Svarapatha, Vol. II ... | 1 | 0 |
| *28. | Ekagnikanda with the commentary of Haradatta with Svarapatha ... ... ... | 1 | 4 |
| *29. | Taittiriyaranyaka with the commentary of Bhatta-Bhaskara with Svarapatha, Vol. III ... | 1 | 0 |
| *30. | Brahmamimamsa with the commentary of Srikantha | 2 | 0 |
| *31. | Madhaviya Dhatuvritti, Vol. II, Part II (Svadi and Curadi) ... ... ... | 2 | 0 |
| *32. | Bodhayana Grihya Sutra with Parisishta ... | 2 | 4 |
| *33. | Taittiriya Pratisakhya with Vaidikabharana and Tribhashyaratna ... ... ... | 4 | 0 |

*N.B.*—Numbers marked thus * are out of stock.

| No. | Title | Price Rs. | a. |
|---|---|---|---|
| *34. | Bodhayana Dharma Sutra with a commentary ... | 3 | 0 |
| *35. | Bhattadipika, Vol. I ... ... ... | 3 | 0 |
| *36. | Taittiriya Brahmana with the commentary of Bhatta-Bhaskara with Svarapatha, Ashtaka I ... | 3 | 8 |
| *37. | Kautilya Arthasastra (First Edition) ... | 3 | 0 |
| *38. | Taittiriya Brahmana with the commentary of Bhatta-Bhaskara with Svarapatha, Ashtaka III, Part I ... ... ... | 3 | 8 |
| *39. | Srimad-Brahmasutra Bhashya (Anandatirthiya) with Tatparya Candrika, etc., Vol. I ... | 3 | 0 |
| *40. | Bhattadipika, Vol. II ... ... ... | 3 | 0 |
| 41. | Khadira Grihya Sutra with Rudraskandiya ... | 1 | 0 |
| *42. | Taittiriya Brahmana with Bhatta-Bhaskara's commentary, Ashtaka III, Part II .. ... | 2 | 4 |
| 43. | Smriticandrika, Samskara Kanda ... ... | 1 | 8 |
| 44. | Smriticandrika, Ahnika Kanda ... ... | 2 | 8 |
| 45. | Smriticandrika, Vyavahara Kanda, Part I ... | 2 | 0 |
| *46. | Bhattadipika, Vol. III ... ... | 2 | 8 |
| *47. | Srimad-Brahmasutra Bhashya (Anandatirthiya) with Tatparya Candrika, etc., Vol. II ... | 3 | 0 |
| 48. | Smriticandrika. Vyavahara Kanda, Part II ... | 3 | 0 |
| *49. | Bhattadipika, Vol. IV ... ... | 3 | 0 |
| 50. | Gautama Dharma Sutra with Maskariya ... | 3 | 8 |
| 51. | Alankara Manihara, Vol. I ... ... | 3 | 0 |
| 52. | Smriticandrika, Sraddha Kanda ... ... | 3 | 4 |
| 53. | Srimad-Brahmasutra Bhashya (Anandatirthiya) with Tatparya Candrika, etc., Vol. III ... | 4 | 0 |
| 54. | Kautilya Arthasastra (Second Edition) ... | 3 | 0 |
| *55. | Bodhayana Grihya Sutra with Parisishta ... | 2 | 4 |
| 56. | Smriticandrika, Asauca Kanda ... | 1 | 8 |
| 57. | Taittiriya Brahmana with the commentary partly of Bhatta-Bhaskara and partly of Sayana, Ashtaka II ... ... ... | 3 | 8 |
| 58. | Alankara Manihara, Vol. II ... ... | 3 | 8 |
| 59. | Srimad-Brahmasutra Bhashya (Anandatirthiya) with Tatparya Candrika, etc., Vol. IV ... | 3 | 8 |
| *60. | Kavya-Prakasa with the commentary of Sanketa ... | 3 | 8 |
| 61. | Ayurveda Sutrà with the commentary of Yoganandanatha ... ... ... | 2 | 0 |
| 62. | Alankara Manihara, Vol. III ... ... | 2 | 8 |
| 63. | Vidyamadhaviya of Vidyamadhava with the commentary Muhurthadipika by Vishnu Sarma, Vol. I ... ... ... | 2 | 0 |

*N.B.*—Numbers marked thus * are out of stock.

| No. | Title | Price Rs. a. |
|---|---|---|
| 64. | Kautilya Arthasastra (Third Edition) ... | 3 0 |
| 65. | Index Verborum to the published texts of Arthasastra of Kautilya, Vol. I ... ... | 2 8 |
| 66. | Index Verborum to the published texts of Arthasastra of Kautilya, Vol. II ... ... | 2 8 |
| 67. | Vidyamadhaviya of Vidyamadhava with the commentary of Muhurtadipika by Vishnu Sarma, Vol. II ... ... ... | 2 0 |
| 68. | Index Verborum to the published texts of Arthasastra, Vol. III ... ... ... | 2 0 |
| 69. | Abhilashithartha Cintamani, Vol. I ... ... | 2 0 |
| 70. | Vidyamadhaviya, Vol. III ... ... | 1 8 |
| 71. | Sarasvati Vilasa (Vyavahara Kanda) ... ... | 2 8 |
| 72. | Alankara Manihara, Vol. IV ... ... | 2 4 |
| 73. | Apastamba Sulba Sutra ... ... ... | 2 12 |
| 74. | Tarkatandava with Nyayadipa, Vol. I ... ... | 3 0 |
| 75 | Advaitasiddhi with Gurucandrika, Vol. I ... | 3 12 |
| 76. | Tattvamuktakalapa with Sarvarthasiddhi, Bhavaprakasa and Anandadayini, Vol. I ... | 4 0 |
| 77. | Tarkatandava, Vol. II ... ... ... | 2 0 |
| 78. | Advaitasiddhi with Gurucandrika, Vol II ... | 3 4 |
| 79. | Tarkatandava, Vol. III ... ... ... | 3 4 |
| 80. | Advaitasiddhi with Gurucandrika, Vol. III ... | 2 4 |
| 81. | Tattvamuktakalapa with Sarvarthasiddhi, Anandadayini, and Bhavaprakasa, Vol. II. ... | 3 0 |
| 82. | Tarkatandava, Vol. IV ... ... ... | 2 4 |
| 83. | Vakyartharatna with the Suvarnamudrika ... | ... |

MISCELLANEOUS.

| No. | Title | Price Rs. a. |
|---|---|---|
| 1. | A Descriptive Catalogue of Sanskrit Manuscripts in the Oriental Library, Mysore, Vol. I—Vedas. | 3 12 |

## B.—Kannada Publications.

| No. | Title | Price Rs. a. |
|---|---|---|
| *1. | Adipurana of Pampa ... ... ... | 2 8 |
| *2. | Jagannatha Vijaya (First Edition) ... ... | 2 8 |
| 3. | Mahabharata—Pauloma and Astika Parvas ... | 1 8 |
| 4. | Mahabharata by Kumara Vyasa, Sambhava Parva | 2 0 |
| 5. | Mahabharata by Kumara Vyasa, Jatugriha Parva | 1 12 |
| 6. | Mahabharata by Kumara Vyasa, Sabha Parva ... | 1 12 |
| 7. | Mahabharata by Kumara Vyasa, Aranya Parva ... | 2 0 |
| *8. | Mahabharata by Kumara Vyasa, Virata Parva ... | 1 8 |

*N.B.*—Numbers marke hus * are out of stock.

| No. | Title | Price Rs. | a. |
|---|---|---|---|
| 9. | Keladinripa Vijaya of Linganna ... ... | 1 | 8 |
| 10. | Udbatakavya of Somaraja ... ... | 2 | 0 |
| 11. | Jagannatha Vijaya of Rudrabhatta (Second Edition) | 2 | 12 |
| *12. | [illegible] by Kumara Vyasa, Udyoga Parva ... | 1 | 2 |
| 13. | Akrura Caritre of Somanatha ... ... | 1 | 0 |
| 14. | Dharmamrita of Nyayasena, Vol. I ... ... | 2 | 4 |
| 15. | Kantirava Narasaraja Vijaya ... ... | 2 | 8 |
| 16. | Dharmamrita of Nayasena, Vol. II ... ... | 1 | 4 |
| 17. | Virabhadravijaya ... ... ... | 1 | 4 |
| 18. | Anantanathapurana of Janna ... ... | 2 | 0 |
| 19. | Sakalavaidya Samhita Sararnava by Virarajendra | 1 | 14 |
| *20. | Mahabharata by Kumara Vyasa, Bhishma Parva... | 1 | 0 |
| 21. | Mahabharata by Kumara Vyasa, Drona Parva ... | 1 | 12 |
| 22. | Kavyavalokana by Nagavarma (Second Edition) ... | 1 | 8 |
| 23. | Mahabharata by Kumara Vyasa, Karna Parva ... | 2 | 4 |
| 24. | Mahabharata by Kumara Vyasa, Salya and Gada Parvas ... ... ... | 1 | 0 |
| *25. | Yogaratnakara with translation in Kannada and Telugu, Part I ... ... ... | 2 | 12 |

## WORKS IN THE PRESS.

*Sanskrit*—

1. Tattvamuktakalapa, Vol. III.
2. Apastamba Srauta Sutra Bhashya.
3. Yadavabhyudaya, Cantos 13–24.
4. Prakritamanidipika with Tippani.
5. Tattvarthasutravritti of Bhaskaranandi.
6. Saundaryalahari with the Commentary of Laxmidhara.
7. Saivaparibhasa of Sivagrayogi.

*Kannada*—

1. Sukti Sudharnava of Mallikarjuna.
2. Singiraja Purana.

*Miscellaneous*—

1. A Descriptive Catalogue of Sanskrit Manuscripts in the Oriental Library, Mysore, Vol. II—Smritis.

---

*N.B.*—Numbers marked thus * are out of stock.

WD 4504—GBPM—750—2-12-43.

